# यात्रा-विलासम्



प्रसाद-प्रासारा सरस - सुकुमाराऽतिमधुरा
सदर्थालङ्कारा सहज - रुचिराश्लेष - सुकरा ।
सदा भव्या नव्या ललित [illegible]विन्यास-चतुरा
कृतिः सेयं धन्यान् युवतिरिव लोकान् रमयतु ।।

—सम्पादकः



म० म० नवलकिशोरकाङ्करः
राष्ट्रपति-सम्मानितः

उत्तरप्रदेश-राजस्थान-शासनाभ्यां पुरस्कृतम्

अ० भा० प्रौढ - संस्कृतगद्य - लेखन - प्रतियोगितायां

प्रथमतया च सम्मानितं

# यात्रा-विलासं

नाम

## साहित्यिकं गद्यकाव्यम्


प्रणेता

राष्ट्रपति-सम्मानितः

महामहिमोपाध्यायः

विद्यावाचस्पतिः, कविशिरोमणिः, गद्यसम्राट्

**आचार्य-नवलकिशोरकाङ्करः**

•

सम्पादकः टिप्पणीकारश्च

वैयाकरण-केसरी, विद्यावारिधिः

**आचार्य-डा० नारायणशास्त्री काङ्करः**

M. A., Ph. D., विद्यालङ्कारः

Associate Professor

राष्ट्रियायुर्वेद-संस्थानम्, जयपुरम्





प्राप्ति-स्थानम्

**रमेश बुक डिपो**

त्रिपोलिया बाजार

जयपुर - 302002

# विषयानुक्रमणिका

# सम्मतयः समालोचनाश्च

# * प्रास्ताविकम् *

पुस्तकलेखन–प्रकाशनोद्देश्यपरिबोधाय पुस्तकप्रणेत्रा प्रारम्भिकं निवेदनं प्रास्ताविकं वा किमपि अवश्यं लेख्यमिति प्राचीना परम्परा अतस्तदेवात्र किञ्चित् प्रस्तूयते । यदा अहं विरचितानेकपुस्तकानां सरलसंस्कृतलेखनपक्षपातिनां म० म० पण्डितराज–श्रीश्यामकुमाराचार्याणां महामन्त्रित्वे भारतीयविद्याप्रचारसमित्या समायोजिते अखिलभारतीयसंस्कृतमहासम्मेलनस्य मुजफ्फरनगरीये पञ्चमे अधिवेशने साभापत्यं पदम् अध्यासीनः आसम्, तदा तत्र विशेषातिथिरूपेण समायातैः राष्ट्रभाषायां भाषमाणैः उत्तरप्रदेशस्य भू० पू० मुख्यमन्त्रिभिः श्रीचन्द्रभानुगुप्तमहोदयैः सस्नेहोपालम्भं विद्वांसः अभिष्टुताः यत् न इदानीं संस्कृतज्ञैः अभिनवेन साहित्येन सुरभारतीभवनं तथा विभूष्यते यथा पूर्वं माघ-बाण-कालिदासादिभिः तत्कोषः अभिवर्ध्यते स्म । अस्माकं वृद्धातिवृद्ध-पितामह-प्रपितामहादयः यानि रघुवंशादीनि, कादम्बरी-दशकुमारादीनि च पूर्वं पठन्ति स्म तानि एव अद्य अस्माकं सन्ततयः पापठ्यन्ते । सर्वतः सञ्जाते अपि प्रभूते परिवर्त्तने नात्र किमपि परिवर्त्तनं दृश्यते । गद्यसाहित्यस्य तु नितरामेव अभावः विद्यते । साम्प्रतम् अपि सर्वत्र सम्मेलनादिषु कविगोष्ठ्यः एव समाहूयन्ते, कवि-सम्मेलनानि एव समायोज्यन्ते, काव्यरचनाः एव च पुरस्क्रियन्ते, परन्तु न कुत्रापि गद्यश्रियः समाद्रियन्ते नापि च गद्यलेखकाः प्रोत्साह्यन्ते । इदानीं स्वतन्त्र-भारते सरलतर-श्लेषसौन्दर्यसम्पादिताभिः प्राञ्जलगद्यनिबद्धाभिः अभिनवाभिः कथाऽऽख्यायिकादिरचनाभिः समावर्ज्य प्रभविष्णवः शिशवः शासनीयाः, पाठ्यग्रन्थेषु च सर्वत्र नवीनाः कृतयः ( Modern Literature ) संनिवेशनीयाः । येन साहित्यसंवर्धनेन सह देशसमाजयोः अपि नवोत्थानं भवेत् इति ।

श्रीगुप्तमहोदयानाम् एवास्य कथनस्य समर्थनम् आचरन्तः सम्मेलनसंरक्षकाः तत्रोपस्थिताः विहारराज्यस्य भू० पू० राज्यपालाः प्राच्यावाच्यविद्यापगासङ्गमतीर्थराजाः लोकनायकाः श्री डा० एम. एस. अणे महाभागाः पूर्ववृत्तं स्मारयन्तः इदमपि अवावदिषत यदस्य अ० भा० संस्कृतमहासम्मेलनस्य पूर्वस्मिन् अधिवेशने सभापतिपदम् अलङ्कुर्वाणैः डा० श्रीसम्पूर्णानन्दमहाभागैः

अपि एतदेव कथितम् आसीत् । अतः लेखनकलाकुशलैः विद्वज्जनैः अवश्यम् अत्र ध्यानं देयमिति । एवम् अमीषां विश्रुतयशोजुषां महाभागानां स्नेहानुरोधेन तत्र सर्वैरेव विद्वज्जनैस्तथाकर्तुं प्रतिज्ञातम् । किन्तु गृहानुपागताः के के पण्डिताः किं किमकुर्वन् इति तु त एव जानन्तु परम् अहं तु भवनमेत्य तं कामं पूर्णं चिकीर्षन् अपि कार्यान्तरव्यापृतः सर्वथैव इमं प्रसङ्गं व्यसस्मरम् ।

गतवर्षे विश्वतः विदिताभिधेयया प्रधानरूपेण महामहिम-भारतराष्ट्र-पति-संरक्षितया बहुभिः राज्यपालैः मुख्यमन्त्रिप्रभृतिभिः च पालितया पोषितया राजस्थानसंस्कृतसंसदा समायोजितायाः अखिलभारतीय-प्रौढसंस्कृतगद्यलेखन-प्रतियोगितायाः सूचनां विभिन्नेषु वृत्तपत्रेषु पठित्वा चिरप्रसुप्तः स मे दुर्दमः कामः पुनरपि समुद्बुद्धः । किन्तु आत्मनः महाकविजनसाध्यकार्योपयुक्तयोग्य-तायाः सर्वथा अभावाद् उपहास्यतामीतेः भूयान् अनेहाः वृथैव यातः । यतः क्व निखिल-भारतवर्षीयाः साहित्यापाराकूपारपारगामिनः महामनीषिणः, क्व च कतिपयाक्षरशिक्षणदुर्विदग्धः मुग्धः अयं जनः । पुनरथ साम्रेडं सुहृदामनुरोधेन विमनायमानेन अपि मया संस्कृतवाङ्मये यात्रासाहित्यस्य अभावमिव अनुभूय गङ्गोत्तरीययात्रावर्णनव्याजेन गद्यलेखनमारभ्य यथासमयम् एतत्काव्यं प्रति-योगितायां प्रस्तुतम् । कीदृशमिदं सन्दब्धम् इति तु सदसद्व्यक्तिहेतवः गुरवः एव प्रमाणम् ।

यैरिह सानुरोधमहं प्रवर्त्तितः सर्वविधविमर्शवितरणेन च उत्साहितस्तेषु गुरुप्रतिस्पर्धिप्रज्ञाजुषः अस्मद्गुरुतनुजनुषः अनन्यहृदयाः सुहृद्वर्याः जयपुरमहाराज-संस्कृतकालेजतः साहित्यविभागाध्यक्षपदात् प्राप्तविश्रामाः श्रीजगदीशशर्म-साहित्याचार्याः बहुवादैः धन्यवादैः सभाज्यन्ते । सहैव राजस्थानविश्वविद्या-लयस्य तात्कालिकैः संस्कृतविभागाध्यक्षैः डा० पी. एल. भार्गवैः, साम्प्रतिकैश्च संस्कृतविभागाध्यक्षैः डा० सुधीरकुमारगुप्तैः, महाराजसंस्कृतकालेजप्राचार्यैः श्रीगोविन्दनारायणनैयायिकैः, साहित्यविभागाध्यक्षैः श्रीगङ्गाधरद्विवेदि-महा-भागैश्च सर्वैरेभिः निर्व्याजस्नेहसरलोदारस्वभावैः महानुभावैः आत्मनः अमूल्य-समयव्ययमनपेक्ष्यापि एतदवलोक्य मद्योग्यताधिकप्रशंसासर्जनादिना सुभृशं ह्रियं लम्भयन् अहं शीघ्रमेवैतत् प्रकाशयितुं प्रोत्साहितः । अतः सर्वेषामेषां प्रचुरान् उपकारान् वहन् एभ्यः प्रभूतान् साधुवादान् समर्पयामि । ये च इमाम् अ० भा०

प्रौढसंस्कृतगद्यलेखनप्रतियोगिताम् आयोजितवन्तः ते राजस्थानसंसदधिकारिणः विशेषतः अस्याः महामन्त्रिणः साहित्याचार्यश्रीरामजीलालशास्त्रिणः एम. ए. पदभाजः धन्यवादप्रदानैः अभिनन्द्यन्ते, ये हि पूर्णं परिश्रम्य नवीनाम् इमामादर्शपरम्परां प्रारब्धवन्तः। अथ च गीर्वाणवाणीभवनायमानैः यैर्देश्यैर्विदेश्यैश्च महानुभावैः पुस्तकविमर्शनपूर्वकं समालोचना-समीक्षादिलेखनेन तथा स्वसम्मति-प्रदानेनाहमभिनन्दितस्तेभ्योऽपि अनल्पाः धन्यवादाः सादरं समर्प्यन्ते। पर्यन्ते च विषमस्थलटिप्पणीलेखनस्य सम्पादनस्य च यस्मिन् पूर्णं भारमाधाय मयका वीतचिन्तेन अभूयत तस्य अस्मज्जेष्ठतनयस्य आयुष्मतः नारायणशास्त्रिकाङ्करस्य साहाय्यं परमं स्पृहणीयमिति सोऽपि शुभाशिषां राशिभिः समायोज्यते।

इदमपि अत्र नाप्रासङ्गिकं, सेयं प्रतियोगिता प्रौढगद्यसाहित्यस्य आयोजिता यत्र हि वाणादिशैली परमावश्यकी निश्चिता संसदा। अतः मयापि स एव पन्थाः स्वीकृतोऽत्र। एवं सत्यपि यत्र सन्धिकरणाद् अर्थदुरूहता शब्द-विरूपता वा विशेषतः अनुभूता तत्र तदपि उपेक्षितम्। परं यत्र तत्र प्रकाशनावसरे आयसाक्षराणामनुपलब्ध्या अनावश्यकोऽपि अनुस्वारादिसन्धिप्रयोगः शिरसि समापतितः एव। अथ चावसाने 'न मानवी रचना निर्दोषा' इति मनसि निधाय निखिल- दोषपराङ्मुखैः काव्यानन्ददत्तहृदयैः सहृदयैः भाव्यमिति भूयो भूयो विदुषः प्रार्थ्यते। पुनरपि—

ज्ञ–"मधुसूदन"–लब्ध–गुणोच्चयो बुध–"विहारि"–कृपाप्त–रसागमः।
"हरि"–दयोदित–सत्कवितोदयो "नवल" एष नमत्यसकृत् सतः॥

विद्यावैभव–भवनम्
जयपुरम्–३
भानुसप्तमी, सं० २०२९

विद्वद्विधेयो
नवलकिशोर–काङ्करः

॥ श्रीः ॥

गद्यसम्राट्-कविशिरोमणि–म० म० नवलकिशोरकाङ्कर–प्रणीतं

# यात्रा-विलासं

नाम

## साहित्यिकं गद्यकाव्यम्

---

### मङ्गलाशंसनम्

[ १ ]

सौपर्वणीह सौवर्णी वाणी विजयतेतराम् ।
प्राणन्ति यत्प्रसादेन संसारे सकला गिरः ॥

[ २ ]

विधानं विद्यानां विदितमभिधानं सुमनसां,
पिधानं पापानां मृदुलमुपधानं मतिजुषाम् ।
निधानं वेदानां किमपि परिधानञ्च वचसां,
प्रधानं भाषाणां जगति जयतात् संस्कृत-महः ॥

[ ३ ]

मध्ये तोरणमागतं परिणये दृष्ट्वा वरं श्रीहरिम्,
आनन्दोद्गत-रोम-सङ्कुचितया लक्ष्म्या स्वपित्रोः पुरः ।
आलीनां कुलयोषिताञ्च वचसां स्नेहानुरोधाच्चिरात्,
तिष्ठद्विन्दु-गलार्पिता सुमनसां माला दिशेन्मङ्गलम् ॥

[ ४ ]

ये मे वाचि विराजिता अविरतं तन्वन्ति वाग्वैभवं,
वैदुष्यं वितरन्ति ये किमपि मे सारस्वतं शाश्वतम् ।
ध्यानावस्थितिमेत्य ये च भविकं नित्यं दिशन्त्येव मे,
ओझाख्यान् मधुसूदनार्यचरणान् नानौमि विद्यागुरून् ।

## विद्वन्निवेदनम्

[ ५ ]

नानाऽलङ्कृति-शोभिता गुणवती भव्यार्थसार्थान्विता,
दीव्यद्भाव-विभावनैकनिपुणा हृद्याऽनवद्या नवा।
सद्वर्णा रससम्भृता शुभपदन्यासा सतीयं कृति-
र्बोभूयाद् वरवर्णिनीव कृतिनां चेतोविनोदावहा।।

[ ६ ]

काव्यं विभाव्यं रसवत्तु नेदमतोऽत्र लभ्या न गुणास्तदीयाः।
दोषास्तु सन्त्येव विभिन्नमार्गाः परं न ते सूरिभिरीक्षणीयाः।।

[ ७ ]

चेत् कुत्रचित् क्वापि रसानुभूतिर्यात्राविलासेऽत्र भवेत् कदाचित्।
तर्हि श्रमं मे सफलं विधाय स्वैरं रसं संरसयन्तु सन्तः।।

[ ८ ]

पारावारमपाययद् घटभुवं व्यासो यदाऽस्मिन् शिला
वाल्मीकिः समतीतरच्च न कथं प्रोक्तास्तदाऽत्युक्तयः।
तन्मेऽपीह मनोविनोदसुलभान् भावान् विपश्चिद्वराः
प्रेम्णा नैव कलङ्कयन्तु करुणाकूपार-पारङ्गमाः।।

[ ९ ]

सारासार-विचार-शून्यहृदया मात्सर्य्यपूरान्विताः
कामं सन्तु सहस्रशो मतिजुषो नम्या हि ते केवलम्।
ये किन्तु प्रतिबुद्ध-बुद्धि-विभवा द्वित्रा विनिर्मत्सरा-
स्तेषामेव कृते कृता कृतिरियं स्याद् भूयसे श्रेयसे।।

[ १० ]

यद्यपि दोषा बहवः सन्त्यत्र तथापि नास्ति मे चिन्ता।
प्रणयान्मयि बुधमणयस्तन्तनति सदा यतः करुणाम्।।

# निदाघप्रसारः

1. अथ किमपि परितापं शोचं शोचमिव क्षीणक्षीणेषु वासन्तिकेषु वासरेषु, स्मृतिमात्रमवशिष्टेषु सहकार-मञ्जरी-मञ्जु-विलासेषु, निःशेषमवसितेषु सरसकिसलय-लता-लास्येषु म्लानत्वमुपयातेषु ऋतुराजारुणध्वज-कल्पेषु पलाश-पलाशि-पलाशेषु, यम[1]श्रायमभिप्रसर्पत्सु रत्युत्सवप्रकरणेषु, क्वचित् क्वचिदेव श्रुतिपथमाप्तेषु मधुमद-कल-मधुर[2]-मधुकर-निकर-मञ्जुगुञ्जनेषु, यत्र तत्र हि कर्णातिथितां यातेषु कोकिल-कुल-कलालापेषु, कथाशेषतां गतेषु किसलयित-सकल-वनोपवना-मोदवासित-गन्धवहेषु, परितः परम-प्रतप्ति-वितरणायैव साहाय्य-मिव कर्तुं परेतभ[3]र्तुरभितः प्रसारितकरः श्रीदेवीन्दिराराज्य-प्रभाव इव चास्खलितशासनो दुःशासनो जनमनो-विशोषणो मुहुर्मुहुः सर्वतः प्रज्वलितैरलातैः[4] सर्वान् दिधक्षुरिव[5], बिभ्रक्षु-रिव[6] आशिशुषुरिव[7], जिगरिषुरिव[8], चिकरिषुरिव[9], प्रोर्णुन-विषुरिव[10] च प्रासरीसरीत् क्रमशो बहुलवाजः[11] श्रीमान् निदाघराजः ।

---

१. यमस्थानम् । श्रयणं श्रायः, भावे घञ् । २. शोभनम्, 'मधुरौ स्वादु-शोभनौ' इति व्याडिः । ३. यमराजस्य । ४. उल्मुकैः । ५. दग्धुमिच्छुः । दह धातोः सन्नन्तादुः । ६. भ्रष्टुमिच्छुः । भ्रस्ज (पाके) धातोः सन्नन्तादुः । अनिट्पक्षे 'स्कोः संयोगाद्योरन्ते च' इति सलोपः । ७. भक्षितुमिच्छुः । अश (भक्षणे) धातोः सन्नन्तादुः । ८. निगीर्णान् कर्तुमिच्छुः । गॄ (निगरणे) धातोः सन्नन्तादुः । ९. विक्षेप्तुमिच्छुः । कॄ (विक्षेपे) धातोः सन्नन्तादुः । १०. आच्छादयितुमिच्छुः । प्र—ऊर्णुञ् (आच्छादने) धातोः सन्नन्तादुः । ११. वेगः । 'वाजो निस्वनपक्षयोः । वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु' इति मेदिनी ।

2. हंहो, इतः पूर्वं मनसिजस्य परममित्रेण येन वसन्त-समयेन अविरतान्तः-स्फुरन्मन्मथ-मनोरथ-भज्यमान-मानस-कामिजन-मनोभावाः समुल्लासिताः, विलासिनी-लीलालास्य-विलासोपचित-लोचनोत्सवा विस्तीर्णाः, कामिनीमाना धूलिसात् कृताः, ललनाजनलज्जास्तनुतां प्रापिताः, कान्ततर-तारुण्य-नव्यावताराणां युवतीनामनुनय-विनय-क्रियाश्च समेधिताः । किमन्यत्, येन निखिलमेव विश्वमनुरागमयमिव, प्रणयमयमिव, प्रेयसीमयमिव, रतिमयमिव, उन्मादमयमिव, मदनमयमिव च कृतं, हन्त तेनैवाधुना तनुतरतनुमता समभूयतेति विधि-विलसितम् । कुसुमित-तरुलतावलिते वासन्तिकेऽनेहसि निःशेषा-विर्भूतानङ्गाऽऽलोका ये लोका बहुलखगकुल-निलीन-तरुतल-विरलच्छाय-शीतल-शिलातलेषु स्वैरं विश्रम्य सोल्लासमिव नितान्तं स्व-स्वान्तं समन्वभवन्, अजिह्लदंश्च[१] यान् दिवं प्रावयन्ती[२] सततं शान्तिसन्ततिः कथमिव ते सम्प्रति तीव्रतर-तपन-तापताम्यत्तनवः सहस्रांशोः खरतर-किरण-निकरपरितापं घोरे निदाघे सासह्यन्ते[३] । यतो देहं दग्धुमिव प्रावर्त्तत दहन इव दारुणः श्रीमानरुणः । यथाहि, एकतस्तिग्मः श्वसनसन्तापः, अपरतः परमोष्णपरितापः, अन्यतः शिरसि प्रचण्डमार्त्तण्ड-प्रतापः, सर्वत्र क्ष्मातल-ज्वलन-सङ्घातः, येन पानीयं कदुष्णं जातं, वसनमपि सोष्मैव भूतं, किञ्चिदशनमपि व्यसनमिव स्थितं, पृथ्व्युपवेशनमपि सर्वथाऽसह्यतां यातम्, आतपातङ्केन पन्थानोऽपि शून्या अभवन्, दशापि दिशः प्राज्वलन्, खगसन्ततयश्चापि

---

१. ह्लादी सुखे चेति धातोर्णिचि लुङि चङि रूपम्, सुखयति स्म इत्यर्थः । २. णिजन्तात् प्रूङ् (गतौ) धातोः लट्, शत्रादेशः । व्याप्नुवाना इत्यर्थः । ३. सहधातोर्[illegible] निपातनम् ।

नाडिन्धम[1]-श्वास-सम्पीडिताः स्वकुलायेष्वेवातिष्ठन् । एवम्भूते ग्रीष्मपरितापे न गेहे विश्रामः, नारामेष्वारामः, न शय्यायां कष्टविरामः, न नलद[2]-जवनिकासु शान्तिक्षणायामः, न सुरम्यं हर्म्यं सुखयति स्म, न व्यजन-श्वसन-सेवनं शीतलयति स्म, न कुसुमशयनं शर्म तन्तनीति स्म, न तुहिनकणमिश्रितं पानीयमेव शरीरतापं तिरोदधाति स्म, नापि च सुरभितं सरसं शीतलतरं तूद[3]-नागरङ्ग-द्राक्षा-दाडिम-प्रपाणमेव शान्तिं प्रयच्छति स्म, प्रत्युत प्रचण्डतिग्मप्रश्वासैः समवर्धत हृदये प्रकम्पः। येन स्नानोत्थितेनेव स्वेदसलिल-बिन्दुवर्षमविरत समुज्झता जनेन न कथमपि समासाद्यते स्म शान्तिकणः ।

## यात्रा–मन्त्रणा

3. एवंविधे विधिविधानविताने विश्वविद्यालयादीनां परीक्ष्यान्[4] निर्णीय श्रान्तं क्लान्तञ्चात्मानं विनोदयितुकामेन मयकैकदा पत्तन-निकेतन-वलक्षाट्टेषु[5] पीतचेलाञ्चलेष्विव लम्बमानेषु तरणि-करनिकरेषु, शयितुमिवास्ताचलनिलयं प्रविशति विवस्वति, समुदितेऽथ भगवति तुहिनकणस्रुति[6] भोजनोत्तरं प्रसादसञ्चिते प्रासादपृष्ठे सुखोपविष्टेषु परिजनेषु पत्नीमभि[7] सम्बोध्य

---

१. सिरोपतापकश्वासपीडिताः इत्यर्थः। नाडीः=सिराः धमन्ति=मुहुर्मुहुः निःश्वासैः उपतापयन्तीति नाडिन्धमाः। 'नाडीमुष्टयोश्च' इति खश् प्रत्यये मुमागमः। 'खित्यनव्ययस्य' इति ह्रस्वत्वम्। नाडिन्धमैः श्वासैः सम्पीडिताः इति नाडिन्धम०। २. उशीरम्। ३. तूंत–इति नाम्ना प्रसिद्धम्। ४. परीक्षितुं योग्यान् परीक्ष्यान्। परीक्षार्थिनः इत्यर्थः। ५. सुधालिप्त-श्वेतवर्ण-हर्म्याद्युपरिभागेषु। ६. चन्द्रमसि। ७. पत्न्याः अग्रतः इत्यर्थः 'अभिरभागे' इत्यभेर्लक्षणार्थकर्मप्रवचनीयत्वात् तद्योगे द्वितीया।

सर्वान् समीरितम्, हन्त दारुणोऽयं शमन इव प्रसादप्रशमनो निदाघसमयः । इह तु सम्प्रत्यरणं[१] मरणम्, अदहनं देहज्वलनम्, अव्रणं मर्मव्यथनम्, अप्राणहरणं शरीरशरणम्[२], विना मोहं मूर्च्छनम्, अरोगमुन्निद्रीकरणम्, अमदनं मनोमथनञ्च । अतः कुत्रातनुतपनातपवत्सु दिवसेषु मनो विनोदनीयम् ? किं समाचरणीयम् ? कः समाश्रयणीयः ? का वा तीर्थस्थली गमनीया ? कोऽस्त्युपायः ? कः खलु सहायः ? को विधिः, का युक्तिः, केन कौशलेन, कतमेन विधानेन, कतरेण प्रकारेण, कतमेन कथालापेन, केन वा भैषज्येन नैदाघोऽयं व्याधिः प्रशमेत् क्लान्तः श्रान्तश्चात्मा प्रसीदेदिति । श्रुत्वैवं विचारमग्नेषु सर्वेषु मदीया दयिता सुधामुचं वाचमुच्चारयन्ती समवादीद्— आर्यपुत्र ! किमप्यहं पिपृच्छिषामि, किञ्चिच्चिकथयिषामि, कमप्युपायञ्च दिदिक्षामि । मयोक्तं भद्रे ! सर्वत्र दयिताधीनं सुव्यक्तश्चित्तरञ्जनम्, भवन्त्यव्यभिचारिण्यश्च भर्तुरिष्टे पतिव्रताः । अतो नहि सङ्कोचः समञ्चनीयः, कथ्यतां यत्कथनीयम्, पृच्छ्यतां यत् प्रच्छनीयम्, अनियन्त्रणानुयोगोऽयं[३] जनः । काऽत्र विचारणा ?

## पत्नी–परामर्शः

4. अथ तयाऽकथ्यत—अस्माभिः सर्वासामपि दिशां प्रायः सर्वाण्येव तीर्थानि गमिकर्मीकृतानि[४], प्रमुखानि निखिलानि महानगराणि नयनातिथितामानीतानि, ग्रीष्मावकाशेषु गङ्गाकूलं[५] निकषा स्वर्गाश्रमेऽनेकशो वासो विहितः परमुत्तराखण्डीयासु यात्रासु बदरिकाश्रमं गत्वापि पूर्वं नास्माभिर्गङ्गो-

---

१. विना संग्रामम् । २. शरीरवधः । 'शरणं गृहरक्षित्रोर्वधरक्षणयोरपि' इति मेदिनी । ३. अप्रतिवन्धप्रश्नः । ४. गमेर्धातोः कर्मीकृतानि = गतिविषयीकृतानि । ५. निकषा इत्यस्य योगे गङ्गाकूलमित्यत्र द्वितीया ।

त्तरीया यात्रा सम्पादिता। अचिन्त्यमनन्तञ्च तन्माहात्म्यं गायन्ति शास्त्राणि। अतस्तदेवास्माकं नैदाघकालिकं मनोविनोदस्थानं भवेत्। यद्यपि सान्तरायाः सन्ति तदध्वानः, परं न क्वापि चिन्ता चेतसि चिन्तनीया। सम[1]मेवास्माकं गार्हस्थ्यकृत्यजातं समवसितमेव, मध्यमोपान्ते[2] वयसि वर्त्तमानावावाम्। विद्या-वैभव-विवेकैः सङ्कुलं साम्प्रतमस्मत्कुलम्, आपूर्वपुरुषादन्यूनैवात्मभूतिरत्रभवति वेविद्यते, पश्चापि श्लाघ्यानुगुण-गुणगणैः कृतप्रणयास्तनया वर्त्तन्ते। सर्वं एव च कृतदारपरिग्रहाः। आत्मप्रतिच्छाया हीमे श्रीमच्चक्षुषैव पश्यन्ति, श्रीमत्कर्णाभ्यामेवाकर्णयन्ति, श्रीमन्मनसैव ध्यायन्ति च, अथ च श्लाघनीयाभिजनः खलु वधूजनः। समभिलषित–समविध-सुषम[3]-योषिद्गुणगणाप्तिधन्ये कन्ये। आश्विनेयाविव सम्पन्नवसुधाभोगरत्नाकरौ[4] जामातरौ। सहजस्नेह-सिन्धवश्च स्निग्धबन्धवः। अतः सर्वतः श्लाघ्योऽयं समयः, धन्यतमेयं वेला, सुयोगसंयुक्तोऽयं क्षणः, विधीयतां यद् विधेयं, नात्र किमप्यन्यथा नाथ! चिन्तनीयम्। सर्वत्र सर्वं शुभं विधास्यति प्रणतप्रियङ्करः[5] शङ्करः इति।

5. एवमस्या मत्तकाशिन्याः[6] स्मित-स्वमृत[7]-स्निग्ध-वदन-कोमलालाप-संवलितेन सुललितेन कान्तोपदेशेन कौतुकातिरेक-समुद्भूत-समुत्साहतया मया मूकेनेव मोहितेनेव वशीभूतेनेव

---

१. सर्वम्। २. मध्यमावस्थायाः उपान्तभागे। ३. सुन्दरम्। 'सुषमं साधु शोभनम्' इत्यमरः। ४. आश्विनेय (स्ववैद्य) पक्षे सम्पन्नवसुधा-भोगरत्नाकरौ इति पदच्छेदः, जामातृपक्षे च सम्पन्न-वसुधा-भोगरत्नाकरौ इति पदच्छेदः। ५. प्रियङ्करः इत्यत्र 'क्षेमप्रियमद्रेऽण् च' इति चकारात् खश्। ६. उत्तमाङ्गनायाः। ७. सुधामृतम्।

ग्रहसङ्ग्रस्तेनेव विषविघूर्णितेनेव च तद्वचनं हृदयीकृतम् । नापि चान्येन केनचन जनेन तदन्तरायभूतेन भूतम् । वस्तुतः पीयूषदृष्टि-प्रभावः सोऽस्याः प्रस्तावः समयानुकूलतया परितापे मलयजलेपन-मिव विपत्प्रतीकारे सुहृद्वचनमिव, रोगे भैषज्यसेवनमिव, अनुतापे च परिसान्त्वनमिव किमप्यानन्दथोर्विजृम्भणमचरीकरीत् ।

## यात्रासम्भार-सम्भरणम्

6. अतोऽहं प्रीतिविस्फारिताक्षः समुद्यद्-हृद्यतर-स्फूर्त्तिश्च 'वचसस्तस्य सपदि क्रिया केवलमुत्तरम्' इति माघीयं वचोऽनुसृत्य तत्क्षणमेव सक्षण वशंवद इव, जडीकृत इव, उन्मत्तीकृत इव च तत्र गमनं स्थिरतामानीतवान् । वस्तुतः प्रतिवर्षमेव मया तया सह ग्रीष्मावकाशेषु कुत्रापि रमणीयोद्देशे गम्यते स्म एव । तदनुभविना दिनद्वयेनैव च मयका यात्रासमुचिता सर्वा सज्जा सम्पादिता । अस्मद्गङ्गोत्तरीया जिगमिषा चैषा जले तैल-बिन्दुरिव झटिति सर्वत्र प्रासेस्रीयिष्ट[१] । येनाकस्मिकगमन-श्रवण-सम्भ्रान्तानां बन्धूनां, स्वान्तेसदां सुहृदाञ्चार्घोपायनमिव गेहागमनमारब्धम् । आत्मानं धिषणं[२] मन्यमानैश्चैभिर्यात्रोप-योगिनः सदुपदेशा अप्यात्मीयत्वेन प्रदत्ताः । केनचन मार्गान्त-राया व्याख्याताः, अपरेण दैनिकचर्या समुपस्थापिता, अन्येन च प्राथमिक-चिकित्सोपयुक्ता वार्ताः प्रक्रान्ताः । समये समये समे-षाममृतस्निग्धाभिर्वाग्भिर्विधूतखेद इव, विकसितहृदय इव, अभिषिक्तोत्तमाङ्ग इव, पावनीकृतान्तरात्मा इव मोदसमुत्क-मानस उपदिश्यमानमार्गश्च मौहूर्त्तिकैरुपदिष्टे शुभसमग्र-ग्रह-वलिते क्षणे वधूजनैः क्रियमाणावतरणमङ्गलः स्तम्भित-बाष्प-वृत्ति-कलुषकण्ठैः स्नेहाश्रुपृषत्[३]-पूर्यमाणनयनैर्विनयावनतशरीरै-

१. प्रसृता अभवत् । २. बृहस्पतिम् । ३. बिन्दुः ।

स्तनयैर्नतेनोत्तमाङ्गेन कृतप्रणामः, ससम्भ्रमोपागतैः प्रतिवेशिजनैश्च कृतोपचारपरिग्रहः पत्नीद्वितीयोऽहं प्रसारितबाहुयुगलेन सर्वानालिङ्ग्य यथायथमाशिषां राशिभिश्च संयोज्य मित्रवर्गेण गाढमुपगूढस्तत्कालोपस्थितान् सर्वान् समुद्भूत-पुलक-परम्परया सीव्यन्निव, गुणगौरवेण तन्मनःसु मज्जन्निव, स्नेहसुधया निखिलान् लिम्पन्निव, परमौत्सुक्येन तानात्मसात् कुर्वन्निव चातिकष्टमरतिगृहीतैः सर्वैर्विसर्जितः पूर्वाह्णे दशवादने समुचितेऽह्नि स्टेशनाभिधे रैल[1]-शकटिकास्थाने समागच्छम् ।

## स्टेशनाभिधस्थानवर्णनम्

7. तत्र हि यात्रिणामनुयात्रिणाञ्च महान् संमर्द आसीत् । इतस्ततः प्रचरतां कोलाहलेन, समालापेन परीहासेन च ध्वनितमिवानुभूतं तत्स्थानम् । तत्र हि एकतो मुखधृत-धूमवर्त्तिकानां ताम्बूलचर्वणारुणाधराणां कुशेशय-सनाभि-शय-गृहीत[2]-ललनाकरतलानां जनानामन्योन्यं सपरिहासा विलासालापाः श्रूयन्ते स्म, अपरतस्तदभिमुखं बद्धदृष्टीनां ग्रामीणानां परमाश्चर्यभरिता मनोभावा अनुभूयन्ते स्म । यथा यथा रैलशकटचा आगमन-समयो नेदिष्ठो[3] भवति स्म तथा तथा यात्रिणां हृदयेषु तदारोहणोत्सुकता समेधमाना बोभवीति स्म । अथ मुहूर्त्तेनैव सा धूमचयमुद्गिरन्ती, चक्रचलननिनादेन कर्णौ स्फोटयन्ती, सीत्कारेण शिशून् तर्जयन्ती तत्रागतवती । आगतवत्यामेव च तस्यां तत्र कोऽप्यपूर्वः कलकलः समजञ्जन्यत[4] । साहसमुत्सृज्य कृतत्वरः कश्चन समवतरति, कश्चिदधिरोहति, एकः पेटिकां

---

१. रायं=धनं लातीति रैलः । २. कुशेशयं=कमलं तस्य सनाभी=तत्तुल्यौ शयौ=हस्तौ तथोक्तौ, ताभ्यां गृहीत० । ३. अतिशयेन अन्तिकः । ४. जनिधातोर्यङि रूपम् ।

प्रक्षिपति ? द्वितीयः प्रसेवं[1] पार्थयति[2], परो वस्त्रकरण्डक-मुत्तारयति, अपरोऽर्भकान् सम्भालयते च । अथान्यत्रान्तर्यायिनां पुर ईदृशा वाचां प्रसाराः प्रावर्तन्त—"त्वरितगमन ! पश्य पश्य कथं विस्मरसि पेटिकां बहिरेव, गमनोन्मत्त ! कथम्पुरः प्रयासि, महिलामपि न पश्यसि ? यौवनान्ध ! मां पादेन किं प्रहरसि ? रे नेत्रहीन ! कुतः समागच्छसि शिरस्येव, नास्त्यस्मिन् कक्षे तिलमात्रमपि स्थानम् । त्यक्तधैर्य ! क्षणं तिष्ठ, ममावतरणा-नन्तरं स्थानं लप्स्यसे, किमाकुली भवसि वृथा ? हंहो भ्रातः ! विलोकय निर्भरं व्यर्थमन्तरायासि, नास्त्यत्र निःश्वसितुमप्यव-काशः । एवमहमहमिकया रैलमारोहतामवरोहताञ्च यात्रिणां तुमुले कोलाहले मयाऽपि यावदन्तः प्रविष्टं तावत्तत्रापि तादृशा एव श्रवणासुखकरा आरावाः सेस्त्रीयमाणा[3] आसन्— "भद्र-मानुष ! अन्यत्र स्थानं मार्गय, नात्रागमनायापि मार्गः, चल-न्नितम्बकुम्भे ! किमत्राक्रमसे ? महिलाबहुल एव कक्षे गन्तुं किं न यतसे ? रे स्थविरे ! किञ्चेलाञ्चलं पातयसि मे स्तनन्धये तनये ? हन्त निष्कल[4] ! चरणेन न्यपीडयस्त्वं मे पादम्, भद्रे ! किन्त्वरसे ? नेदानीमेव शकटिका यास्यति, आः वृद्धमानव ! तिष्ठ तिष्ठ तत्रैव यष्टिकामवलम्ब्य, स्वपितीह रुग्णो जनः" इत्यादिषु बहुविधभावभृतेषु प्रचलत्सु वचनप्रसारेषु कथमप्यहमपि परि-जनसहयोगेन परिणीतया सह वातायनीयं स्थानमवापम् ।

## रैल–प्रस्थानम्

8. स्वल्पसमयानन्तरं सम्भूते प्रस्थानसूचके रैलयानस्य सीत्कारशब्दे आत्मीयास्ततो विसर्जनावसरे "श्रीमत्कुशलोदन्ता-

---

१. स्यूतं='थैला' इति हिन्द्यां प्रसिद्धम् । २. प्रक्षिपति । पृथ प्रक्षेपे (चु०) धातोर्लटि । ३. क्रियासमभिहारेण प्रसरन्तः । ४. हे वृद्ध ।

मृतपानार्थिनो वयं भवत्प्रत्यावृत्तिशोभनक्षणं प्रतिक्षणं समवेक्षमाणाः स्थास्यामः" इत्यादिभिः साम्रेडमुक्तैः स्नेहस्निग्धैर्वाक्यैराकर्षन्त इव हृदयम्, अभ्यषिञ्चन्त इव सुधाधाराभिर्वाग्भिः श्रवणयुगलम्, अनुगृह्णन्त इव प्रेमामृतसम्भृतैर्लोचनैरस्मान्, आश्वासयन्त इव मधुरसान्द्रैः शब्दसमुदयैर्मानसम्, स्नपयन्त इव मन्दस्मितपीयूष-पृषद्भिः प्रत्यङ्गम्, आह्लादयन्तश्च समुत्साहसंवर्धकैरालापकलापैर्नो ललाटपट्ट-निहित-करयुगलाः सर्वे रैलशकटिकाप्रस्थानेन सहैव प्रत्यगच्छन् स्वगृहान् ।

## मार्ग-वर्णनम्

७. अथ वियति[१] तरतीव तरुणतरे तरणिबिम्बे रैलशकटिकाऽप्यस्मदीया वायुजवं पराजेतुमिवान्तर्वणभुवि[२] बाढं धावन्ती दूरमपसरन्त्वरं[३] दूरमपसरन्त्वरमिति चलच्चक्र-चङ्क्रमणनिनदव्याजेन दूरादेव लोकान् सङ्केतयन्तीव, चलन-रय-समुत्थपवनैः प्रचण्ड-मार्त्तण्ड-मयूख-ताप-सन्तप्तां वनस्थलीमुपवीजयन्तीव, समधिकलोकसृष्टि-निरुद्धावकाशा[४] आशा[५] आश्वासयन्तीव, गहनोपवन-वन-नग-नगर-ग्राम-गर्त्त-नद-नदीप्रदेशान् समुल्लङ्घयन्ती मध्ये मध्ये च जयशब्दमिव प्रस्थानसिद्धीनां तर्जनघोषमिव विघ्नव्यूहानां मङ्गलोच्चारणमिव यात्राविधीनां सी-सी-शब्दं वितन्वती, श्रमश्रान्ता कान्ता इव स्थाने स्थाने तिष्ठन्ती पानीयञ्च पिबन्ती, रूपाजीवेव[६] कांश्चित् स्वीकुर्वती कांश्चिच्च परित्यजन्ती कौबेरीं ककुभं गच्छन्त्यासीत् । मार्गे च

---

१. गगने । २. वनाभ्यन्तरप्रदेशे । 'प्रविरन्तः०' इत्यादिना वननकारस्य णत्वम् । ३. शीघ्रम् । ४. अधिकजनसङ्ख्या-कारणात् श्वसितुमपि असमर्थाः इत्यर्थः । ५. दिशः । ६. वेश्या इव । रूपम् आजीवः यस्याः सा रूपाजीवा ।

लज्जाविहीना युवतय इव सर्वाध्यक्षं वदनाधर-कपोल-नासाश्चुम्बन्त्यो वक्षसि च प्रसभं लगन्त्यो मस्तकमप्यधिरोहन्त्यः पथिधूलयः सर्वानस्मांल्लाञ्छितानकुर्वन् ।

**10.** रैलयानमधितिष्ठन्नहमपि मध्येमार्गं शुष्कशुष्कैर्विरलदलैः पादपैर्वितरितासु छायासु शरीरार्धधृतोत्तरीयांशुकाः परिधृता-[1] र्धोरुकाश्चलवलय–चारुतर–प्रकोष्ठाः परमघर्म–विघूर्णिता औपकर्णिक[2]-लोचनाः करिकलभ[3]-कुम्भ-सन्निभ-परमपीवर-निरन्तराभितुङ्ग-वक्षोजाभ्यां सम्यगुच्छ्वसितुमप्यपारयन्तीः परितः परिश्लथाङ्गीः श्रममपनयन्तीः श्रमिकसीमन्तिनीर्विलोकयन्, कुत्रचित् सस्यस्थली-पालिकानां वरबालिकानां करतालिकानां मधुरनिस्वनश्रवणनिश्चलावयवान् मृगशावकान् वीक्षमाणः, कुहचन पुरुषायित-क्रियाप्रकर्षहेतोरिव दोलामधिरूढानां मुहुर्मुहुर्नतोन्नतस्फार-नितम्बमण्डलानां प्रौढानां परिश्रमाभ्यासं पश्यन्, एकत्र च नितान्तोन्नत-वन्यफल-दल-चिचीषया मृदुचरणतलाग्रभागेन दुःस्थितत्वात् स्तनकलशभारस्यासहनीं निरवलम्बनत्वान्नीचैः खेलतां शिशूनामुपरि पतन्तीं वनोपवनविहारिणीं रतिमिव विग्रहिणीं ग्रामटिका–वधूटिकामवलोक्य विनयेन वारिताट्टहासः

---

१. परिधृतम् अर्धोरुकं=चण्डातकं (ओछा लहंगा) याभिस्ताः 'अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम्' इत्यमरः। २. कर्णान्तदीर्घनयनाः। कर्णयोः समीपमुपकर्णम्। समीपार्थेऽव्ययीभावः। तत्र प्रायभवे बाहुल्येन भवतः इति औपकर्णिके। 'उपजानूपकर्णोपनीवेष्ठक्' इति ठक्। औपकर्णिके लोचने यासां तास्तथोक्ताः। ३. करीव प्रौढः कलभः=गजशावकः, तत्कुम्भसन्निभौ, अत एव परमपीवरौ, तथा निरन्तरौ=अन्तररहितौ=परस्परव्यवधानशून्यौ च अभितुङ्गौ च, कठोरतया अग्रोत्थितौ च यौ वक्षोजौ, ताभ्यां०।

सन् पशुसंमवाय-मृदित-पीतघासां[१] पांसुपटल-समाच्छन्नाकाशां यत्र तत्र तरुतलनिषण्ण-कुरङ्गनिकुरम्बां वेशन्तो[२]-त्तीर्णवराह-निवहां विहङ्गकुल-दलितशुष्कफलवतीं काननवसुमतीञ्च नेत्रातिथितामानयन्नपराह्णे विहितफलाशनो विस्रब्धोपविष्टस्तत्र कृतसाप्तपदीनानां यात्रामित्राणां परमसौकुमार्य-माधुर्य-रस-निष्यन्दिनीभिर्विविधाभिर्गीर्भिः समाकृष्टचेता आयासबहुलमपि प्रलम्बकालयापनं नान्वभवम् ।

## सायं देहलीप्रवेशः

**11.** अथ च हृदयविराजितायाः पद्मिन्या अनुरागेणेव रक्तीभूय निशानिवासाय गतवति भास्वति मानिनीमनः-प्रमदवन-प्ररूढ-दृढमूल-मानवल्लरी[३]-वितान-लवनाय[४] मनोभुवा करधृतेन लवित्रेणेव[५] बालेन्दुना मनाक् कालं प्रकाश्याकाशं गतवति विलयं विजृम्भितुमारभन्त मधुकर-निकर-रोचींषि तमांसि, आसन्नाष्टवादनायाञ्च शर्वर्य्यामावामपि सर्वथाननुभूताध्वखेदौ भारतराजधानीं देहलीमुपागमाव । यद्यप्यत्रापि वितरिताघो[६] निदाघो वपुर्दिधक्षन्निव, स्वास्थ्यं चूचूर्णयिषन्निव, चेतनां चिक्षन्निव, उत्साहं लुलुण्ठयिषन्निव च प्रसरीसरीति स्म तथापि रात्रावदूरस्थायामेव विद्युद्दीप-द्योत-प्रद्योतित-शालायां विशालायां धर्मशालायां दिवातनीं[७] सायन्तनीञ्च कारिं[८] सम्पाद्याधि-

१. पीतवर्णघासवतीम् । ५. वेशन्तः=पल्वलम् । ३. कोषे ह्रस्वान्तोऽप्ययं वल्लरिशब्दः कविभिर्दीर्घान्तोऽपि प्रयुज्यते । यथा माघेन—व्यवृणुत वेल्लितबाहुवल्लरीका" अत्र ङीषि दीर्घान्तोऽयं शब्दः । ४. छेदनाय । ५. कर्त्तनसाधनम् । 'दांतली' इति प्रसिद्धम् । ६. वितरितम् अघं=दुःखं येन सः । 'अंहोदुःखव्यसनेष्वघम्' इत्यमरः । ७. सायं चिर०' इत्यादिना ट्यु प्रत्यये तुट् । ८. [illegible]

रजनि[1] सुखस्वापश्चानुभूय निशाजागरणखिन्नतयेव स्वप्तुं गतवत्सु नक्षत्रचक्रेषु, विरहविधुरतरुणीजन-सोष्मश्वासैरिव म्लानत्वमुपगतासु गेहदीपपरम्परासु, क्षणद-क्षणदा-विलयन-कष्टेनेव क्षीणतां यातासु विपणि-विद्युन्मालासु, नवनव-समुत्साह-सञ्चारणायेव सुवहत्सु लता-किसलय-सुमनः-परिमलेषु प्रत्यूषसमीरेषु, प्रेमोद्गारमिव समुद्गिरति चारुणप्रकाशे श्रीमत्सप्ताश्वे शनैः शनैरस्मन्निद्रामप्यादाय निर्जगाम नितम्बालसगामिनी कामिनीव यामिनी ।

## प्रातर्यमुनावर्णनम्

**12.** अथाहमपि समवसायित-दिवसमुख-क्रियाकलापः सिस्नासुः पदातिरेव कालिन्दीकूलमन्वचलम् । तदानीं हि रात्रिजागरितिहृदयार्तिं प्रशमयितुमिव, नैदाघीं व्याधिविकृतिं सान्त्वयितुमिव, यमुनायां यामिनीपापानि प्रक्षालयितुमिव वा निस्तन्द्र-सुन्दर-नवेन्दीवर–तिरस्करणक्षमेक्षणाः, कालिन्दीजल–कान्ति–कान्त-कुन्तलोत्तमाङ्गाः, चीनांशुकानपहित–मेचकोच्च–चूचुक–कुच–कुम्भाभोगाः, रसनाकलाप–जल्पाक–घन–जघनभागाः, उभय-कर्णावलम्बित-कनकाभरण-प्रभा-प्रभावित-मुखमण्डलाः, नितम्ब-कुम्भ-भरालसगमनाः, उरसि च ताराप्रकरानुकारान् हारान् परिदधानाः शतशः स्वर्गीयाप्सरसःप्रतिरूपाः पुरतरुण्यः समवतारित–वसन–भूषण–भाराः, समुत्तुङ्ग–नितम्बचुम्बि–केश–सम्भाराः[2] जलकेलि-कलापलीन-ललनापीन-स्तन-सौन्दर्य-सदन-वदन-घनजघन-समास्फालित-तोयायां यमुनायां सरसिज-सुन्दराभ्यां कराभ्यां काममम्भांसि समुच्छाल्य भगवते पुष्पधन्वने

---

१. अधिरजनि=रात्रौ । विभक्त्यर्थेऽव्ययीभावः । २. नितम्बपर्यन्तलम्बमानकेशाः इत्यर्थः ।

प्रातरर्घ्योदकमिवार्पयन्त्यः कामसहस्रनाम–स्तोत्रपाठमिव मुखेन किमपि समुच्चारयन्त्यः पीनपयोधरप्राग्रभागेन च तोयतरुण-तरङ्गानुच्छालयन्त्यस्तत्र समुपागतानां विस्मयविस्मृतनिमेषाणां मानुषाणां मनःसु न जाने कांस्कान् भावान् जनयन्त्य आसन् ।

**13.** अथ च तत्र काचन शोभनाऽङ्गना पृथुपयोधरयुगलेन हृदि निहितकुम्भा इव नितंम्बद्वयेनाथ बद्धतुम्बीफला इव सविभ्रमं तरन्ती मनः प्रसादयति स्म । काऽपि जलमवगाहमाना स्ववय-स्याया हृदयस्थलीरूढमदनवल्लरीं वर्धयितुमिव मुहुर्मुहुरञ्जलिना तत्कुचाग्रं सिञ्चन्ती चेतश्चोरयति स्म । काप्यथ स्नानपरिच्छदं वहन्त्यपि जलागाधभीत्या सहसा सलिलं नाभिनिविशमाना दयितेन च कथमपि धार्यमाणहस्ता प्रशस्तावयवा शिखिपिच्छ-लुलित-बालजाला[1] पुरबाला स्नाति स्म । अथान्या स्नाना-वतीर्णा वसनं वसानाऽपि[2] कुलललना गौरगात्र-संसक्तार्द्र-वस्त्रान्तर्दृश्यमान–सौन्दर्यसारतया लज्जया भूमौ विलीनेव, वपुरभिनिविशमानेव, सत्वरं तिरोधानं कामयमानेव, तटसंनि-हितान् कुटिलेक्षणान् लोकान् धिक्कुर्वाणेव च समुपविश्य तत्रैव नवपरिधानं धारयति स्म । एवंविधे समुल्लासे तत्रैवाहमपि सपत्नीको गङ्गाप्रतिस्पर्धि-पानीयाया यमुनायाः सकलसन्ताप-हारिणि सुधायमानवारिणि सुचिरं सम्पादिताभिषेकक्रियः परि-धृतधौतवसनः सुविहितसन्ध्योपासनपाठपूजनस्ततो यामुने संसरणे[3]समागच्छम् । यत्र ह्येकतो निर्मीयन्ते स्म मोदकाः, परतो विधीयन्ते स्म शष्कुल्यः, अन्यतः सम्पाद्यन्ते स्म

---

१. नदीजल-प्रवाहवशात् मयूरबर्हंवत् विस्रस्तकेशकलापा ।

२. वसाना इत्यत्र आच्छादनार्थकवसधातोः शानच् । ३. राजमार्गे ।

कुण्डलिन्य:[१],कुत्रचित् पिष्यन्ते स्म विभिन्ना अवलेहा:,[२] कुहचन मण्डचन्ते स्म काचशराविकासु[३] राजतै:[४] पत्रैर्दधिवटावदंशा:[५], कुत्रापि पूर्यन्ते स्म सरसया रसालया[६] कंसा:[७], इतरत: संस्क्रियते स्म कूर्चिका, परत्र सौत्रिकै: सीव्यन्ते स्म वसनानि, अपरत: कथ्यन्ते स्म कथा:, अन्यतो ग्रथ्यन्ते स्म मालाश्च। तत्रैव कान्दवीक[८]-निषद्यायां[९]शर[१०]-सम्पूरितेन दाधिकेन[११]कृत-शीतल-कल्यवर्त्तोऽहं[१२] जनसाधारणेऽपि लब्धवहुलप्रसाराया विदेशीय-संस्कृतिपरम्पराया दर्शनकुतूहलेन प्राचीनामर्वाचीनाञ्च शोभनभवनावलिं देहलीं दिदृक्षुर्नगराभिमुखोऽभवम्। यत्र हि विश्रुत: शोणित[१३]- दुर्गकूट: पवनान्दोलित-त्रैर्वणिक[१४]-ध्वज-तालवृन्तेन विशदगगनाङ्गनसञ्चलनवलान्तं मित्रं[१५] वीजयन्निव दर्शकांश्चाह्वयन्निव शोभते स्म।

## देहलीभ्रमणम्

14. इयं हि देहली सकलपुरनिकरनिकषायमाणा[१६] अगण्य[१७]-

---

१. जलेबियां इति नाम्ना प्रसिद्धा:। २. चटनियां इति प्रसिद्धा: ३. काचभाजनेषु। काच की तस्तरियां, प्लेटें इति नामकेषु पात्रेषु। ४. चांदी के बरक इतिख्यातै:। ५. पानरुचिजनकं भक्षणं, दही बडों की चाट इति प्रसिद्धम्। ६. शिखरिणी, 'शिखरण' इति प्रसिद्धया। ७. पान-पात्रम् 'गिलास' इति ख्यातम्। ८. भक्ष्यकार:, हलवाई इति ख्यात:। ९. विपणी। १०. दध्यग्रभाग:। दही की मलाई, इत्याख्यात:। ११. दही की लस्सी इति नाम्ना प्रसिद्धेन पेयेन। १२. प्रातराश: 'नास्ता' इति प्रसिद्ध:। १३. लाल किला इति प्रसिद्ध:। १४. तिरंगा। १५. सूर्यम्। १६. निकषायते असौ निकषायमाणा। १७. अगण्यै:=असंख्यै:, पण्यै:= विक्रेयपदार्थै: विक्रेयार्थं प्रसारितै: विविधदिव्यद्रव्यै: उदितं मुम्बापुर्या इव माहात्म्यं यस्या: सा।

पण्य-प्रसारित-विविधदिव्य-द्रव्योदित-मुम्बापुरी-माहात्म्या, मेरु-शिखरिशिखरस्पर्धयेव तरणि-सरणि-रोधं विधातुमभ्रंलिह-सौध-शिखरैर्विराजिता, पदे पदे सुरालय[१]-शिलेव प्रशस्तसुधाधवला, विबुधमन्दिरैरिव भव्यभवनैरलङ्कृता, वियद्वीथिकेव कन्या-कुम्भ-तुला-मिथुन-पूर्णा, वैकुण्ठनगरीव चक्रपाणि[२]-कृताधिष्ठाना, धरणीधरित्रीव[३] बहुशोभ[४]-वनान्विता, विवाहोत्सव-स्थलीव सुरुचिरमणी[५]–रमणीया, सुभट–विकट–वसतिरिवाग्रतोरण[६]–शोभना, याज्ञिक-गृह-भूमीव[७] वितान[८]-विभूषिता, सुरपतिपुरीव सुधा[९]-शोभित-भवना, सुग्रीवसेनेव गवाक्ष[१०]-सहिता, विपिन-वसुमतीव बहुसालसमुपेता[११], बलिराजसभेव सदानवा[१२], शब्द-

---

१. सुमेरुः । २. वैकुण्ठपक्षे चक्रपाणिना=विष्णुना कृताधिष्ठाना । देहलीपक्षे च चक्रं=मरुत्तरचालनचक्रं (हैंडिल) पाणौ येषां ते चक्रपाणयः, तैः कृताधिष्ठाना । ३. पर्वत-भूमिः । ४. नगरीपक्षे बहुशो भवनान्विता । पर्वतपक्षे च बहुशोभ-वनान्विता इति पदच्छेदः । ५. विवाहोत्सवस्थलीपक्षे सुरुचि-रमणीभिः रमणीया । नगरीपक्षे च सुरुचिराः मणयः यस्यां सा सुरुचिरमणिः, रमणीया च । 'ढ्रलोपे, इत्यनेन दीर्घः । ६. सुभटवसतिपक्षे अग्रतो रणशोभना । नगरीपक्षे च अग्रतोरण-शोभना इति पदच्छेदः । ७. भूमिशब्दो दीर्घान्तः अपि वर्तते । यथा 'अजस्र-भूमीतट' (नै. च. १) अत्र 'कृदिकारादक्तिनः' इति वार्तिकेन ङीष् । ८. वितानं यज्ञः, वर्षातपादिवारणार्थम् उल्लोचाभिधमाच्छादनवस्त्रञ्च । 'वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम्' इति मेदिनी । ९. अमृतं गृहादिलेपन–श्वेत–द्रव–द्रव्यञ्च । 'सुधालेपोऽमृतं स्नुही' इत्यमरः । १०. गवाक्षः-इति नामकः सुग्रीवसेनापतिः, वातायनञ्च ११. वृक्षविशेषाः शालाश्च । १२. बलिराजसभापक्षे दानवैः सहिता, नगरी पक्षे च सदा नवा इति पदच्छेदः ।

विद्येव-धातु-प्रत्यय-बहुला, छन्दोविचितिरिव प्रहर्षिणी[१], ज्योतिर्विद्येव मित्र[२]-विधु[३]-कुज[४]-बुध[५]-गुरु[६]-कवि[७]-केतु[८]-विलसिता, रावणनगरीव सुवर्णमयी मन्दोदरीकृतावासा सपुण्यजनाच्च, महाभारतकथेव दुर्योधनवती ससञ्जया द्यूतबहुला च। अथ च प्रतिपथं घण्टापथाभिमुख-वातायनेषु स्थितानां नगरतरुणीनां मदनवर्धनैरीक्षणैः कमलोपायनैरिव सम्यक् सत्कृताध्वनीना, क्वचिदविरत-धूपायितागुरुवर्त्ति-सुरभिताऽतिरम्यहर्म्या, क्वचिच्च धीरध्वनि-मुरज-वल्लकी-क्वणन-ध्वनित-प्रासादा प्रतिपलं किमपि स्वर्गातिशायि सौन्दर्यं वितन्वाना समशोभत। यत्र च दुर्वर्णं[९] रजतं न भवन-निकुरम्बम्, अवटु[१०] र्ग्रीवान्त्यभागो न गृहस्थजनः, परभृतः[११] कोकिलो न निवासिलोकः, गुल्मिन्यः[१२] क्रीडोपवनवल्लर्यो न प्रकृतयः, समितिः[१३] शास्त्रनीतिर्न जनसम्पत्तिः, पन्नगा[१४] भुजङ्गा न भृतिभुजः[१५], दरदो[१६] हिङ्गुलो न पुरुषवेषः, रक्तता च प्रसिद्धे दुर्गे एव न नेत्रयोः। हन्त, या ससुराल-

---

१. हर्षदात्री, एतन्नामकं छन्दश्च। २. सूर्यः, सुहृत् च। ३. चन्द्रः कर्पूरञ्च। 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' इतिविश्वः। ४. मङ्गलः वृक्षश्च। ५. सौम्यग्रहः पण्डितश्च। ६. वृहस्पतिः, धर्मोपदेशकश्च। ७. शुक्रः कवयिता च। ८. एतन्नामा ग्रहः, पताका च। ९. रजतम् दुष्टवर्णवत् च। १०. वटुरहितः। ११. परैः भृतः=पोषितः=पराश्रितः इत्यर्थः निवासिलोकपक्षे, कोकिलपक्षे च परेण काकेन भृतः। १२. गुल्मरोगवत्यः—इति पौरजनपक्षे। प्रकृतयस्तु पौरजनाः। "प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गे" इति मेदिनी। १३. मितिः=प्रमाणं तत्सहिता। "समितिर्युधि संगमे। साम्ये सभायाम्" इति हैमचन्द्रः। १४. पन्नं=गलितं गच्छन्तीति ते पन्नगाः। १५. वैतनिकाः=सेवकाः। १६. दरं=भयं ददातीति दरदः।

याऽपि[1] पुण्या[2], सर्वविधविड्[3]-बहुलापि स्वच्छचतुष्पथा, सर्वथा विशालाऽपि पृथुशाला, भुजङ्गशून्याऽपि भुजङ्गाधिष्ठिता, अभुजङ्गवत्यपि भोगिविलसिता परितो विहारारामाला-वलयिताऽऽसीत्। यामवलोक्य मनस्येवंविधा भावाः प्रादुरभूवन्—अहो निश्चयेनैषा सुधासितभवन-मालोपबृंहिता सुरपतिपुर-स्पर्धिनी नगरी न गरीयसी कासाम्। यतोऽत्र प्रतिभवनमधरीकृतसप्त-स्वर्गाः शोभनाः शालाः, विहितचेतः-प्रसादाः प्रासादाः, वीथ्यां श्रवणसुखदायिनो गन्धर्वाणां[4] मधुरध्वनयश्च। किमन्यत् यत्र मुक्तामयो[5] नागरिकोऽपि सुरसमूह इव विबुधः, कुबेर इव धनदः, वरुण इव प्रचेताः, कामदेव इव विश्वकेतुः[6], नन्दनवनालिन्द इव ससन्तानः[7], अग्निरिव धनञ्जयः पावकश्च[8] कार्तिकेय इव सेनानीः शक्तिधरश्च, इन्द्र इव जिष्णु[9] र्वृद्धश्रवाश्च[10], यम इव समवर्ती धर्मराजश्च, पवन इव सदागतिराशुगश्च,

---

१. सुरालयः=मदिरागृहं, तत्सहिताऽपि पुण्येति विरोधः। तत्परिहारस्तु—सुरालयाः=देव-मन्दिराणि, तत्सहिताऽपि पुण्या सुन्दरी वा। २. पावना सुन्दरी च। 'पुण्यस्त्रिषु मनोज्ञे स्यात् क्लीबः सुकृतधर्मयोः। इति विश्वः। ३. पुरीषः विशश्च। ४. देवयोनिविशेषाणां पुंस्कोकिलानाञ्च। 'गन्धर्वास्तु नभश्चरे। पुंस्कोकिले गायने चेति' कोषः। ५. नीरोगः, मौक्तिकमयश्च। ३. विश्वस्मिन्=सर्वस्मिन् केतुः पताका अस्येति कामपक्षे। विश्वे=जगति केतुः=द्युतिः यस्येति नागरिकपक्षे। "पताकायां द्युतौ केतुर्ग्रहोत्पातादिलक्ष्मसु" इति रभसः। ७. सन्ततिः कल्पवृक्षश्च। ८. "पावकोऽग्नौ सदाचारे वह्निमन्थे च चित्रके। भल्लातके विडङ्गे च शोधयितृनरेऽपि च" इति कोषः। ९. जित्वरोऽभिनवश्च। जि जये अभिभवे वा इति धातोः ग्स्नुः। १०. वृद्धे श्रवसी यस्य सः, तथा वृद्धेषु श्रवः=यशः यस्य स इति च।

गणेश इव विनायको लम्बोदरश्च, अच्युताग्रज इव बलभद्र[१]-स्तालाङ्कश्च[२]। विष्णुरिव लक्ष्मीपतिः सुदर्शनसुन्दरश्च। ब्रह्मेव हिरण्यगर्भः[३] प्रजापतिश्च। शिव इव महेश्वरः सर्वमङ्गलाधीशश्च[४]। बुद्ध इव सर्वज्ञः शास्ता च। अहह यत्र स्त्रीसंहतिरपि गौरी, पद्मालया, चञ्चला, इन्द्राणीकृतहृदया[५] च। अतो निश्प्रचं प्रचुरतरहिरण्यगर्भाः[६], प्रभूततर-माधवाः[७] पुरुह[८]-पशुपतयश्च लोकास्त्रिदिवमतिशेरते स्म।

## देहल्यां स्त्रीजनः

15. एवं तत्रापणे[९] कुत्रचिन्मुद्रागणनपरायणान्, कुत्रचिद्वसनपर्यवेक्षणसंसक्तेक्षणान्, कुत्रचिद् विविधाभूषण-ग्रहण-संसक्तचित्तान् लोकान् समवेक्षमाणो यावदहं मरुत्तरयानद्वाराऽर्वाचीनां देहलीं गतवांस्तावत्तत्रापि राजमार्गेषु क्वचित् सुशोभन-श्रोणिश्लिष्ट-सङ्कुचितपादयामवसन[१०]–परम-पिनद्ध-नितम्बमण्डला-

---

१. बलभद्रः=कृष्णाग्रजः पक्षे बलेन=सामर्थ्येन भद्रः। २. तालाङ्को ध्वजो यस्येति बलदेवपक्षे, महालक्षण-सम्पन्नश्चेति नागरिकपक्षे। 'तालाङ्कः करपत्रे स्याच्छाकभेदेऽच्युताग्रजे। महालक्षणसम्पन्नपुरुषे पुस्तके हरे" इति कोषः। ३. हिरण्यं=हिरण्मयमण्डलं गर्भोऽस्येति ब्रह्मणः पक्षे। हिरण्यं सुवर्णं गर्भे=कुक्षौ येषामिति नागरिकपक्षे। ४. सर्वविधमङ्गलानां स्वामीति नागरिकपक्षे। सर्वमङ्गलायाः=पार्वत्याः पतिरिति च शिवपक्षे। ५. स्त्रीकरणसंहतौ विहितहृदया। 'इन्द्राणी शच्यां निर्गुण्ड्यां स्त्रीकरणेऽपि च' इति कोषः। ६. प्रचुरतरं हिरण्यं=सुवर्णं गर्भे=कुक्षौ येषान्ते। अन्यत्र हिरण्यगर्भो=ब्रह्मा। ७. माधवः=विष्णुः, मायाः=लक्ष्म्याः, शाम्बर्याः (इन्द्रजालप्रपञ्चस्य) वा स्वामिनः इति नागरिकपक्षे। ८. बहुलम्। ९. हट्टे। १०. पायजामा–इत्याख्यं जघनवसनम्।

भोगत्वेनैवोपवेष्टुमशक्नुवत्यो धरणीरुहाधिवलिताया वल्लर्या विलसितमिवानुकृत्य दयितांसविनिहित-कमलकोमलकरा नखरञ्जनी[1]—रक्तीकृतनखराः[2] सोल्लासं तिष्ठन्त्यः, क्वचिच्छिवालयशिखरमुपहसितुमिव शिरसि उच्चैस्तरां विविधाकारं केशवेशभारं[3] वहन्त्यो भावुकानां मनःसु विभिन्ना भावना उद्भावयन्त्यः, क्वचित् सहचर-करविधृत-तालवृन्तकल्पातपत्रविदूरित-विकर्त्तनातप-सन्तापा अपि चेलाञ्चलेन वदनघर्माम्बुबिन्दून् प्रोञ्छन्त्यः, क्वचित् स्वकीयोत्तरीयाञ्चलस्यातिसूक्ष्मत्वेन दृश्यमान – सकल – संसार–सौन्दर्य–सार–समुच्चय–कलितदेहावयवाः शाटिकाः प्रच्छदपट[4]—वासांसि च क्रीणत्यः, क्वचित् सुमनोमालावनद्ध-कबरीनिकुरम्बाः सदम्भाः सोपनेत्रा वृत्तपत्राणि पठन्त्यः, क्वचिद् घनपीन-नितम्बकुम्भ-संन्यस्तहस्ताः सवयोभिर्लपन्त्यः, क्वचिदसकृदपसृतांशुकेनाच्छादित-निरन्तर[5]-पीवर-मनोहर-स्तनमण्डला अभिदयितं[6] नलिकया फलरसं पिबन्त्यः, क्वचिद् विशिथिल-केशजालभार-बन्धनावसक्तकरा ओष्ठ[7]-रञ्जनाञ्चितरदनच्छदा[8] दुर्ललितं स्तनन्धयं सान्त्वयन्त्यः, क्वचित् सूक्ष्म–धम्मिल्ल–बन्धन–जालान्तर्दृश्यमान–केशपाशा विलासगमनैः करेणुकामुपहसन्त्यः, क्वचित् कन्दर्प-विकारकारि-पीवर-पयोधर-भूरि-भारभुग्नमध्यभागाः करगृहीतेन कमलदल-कल्पेन वसन[9]—व्यजनेनात्मानमुपवीज्य नाट्येन सुमनःस्तवकं जिघ्रन्त्यः, क्वचिन्नितम्ब-कुम्भभारालस-निश्चलचरणा दयितेन

---

१. नखरागः 'नेलपालिस' इति प्रसिद्धः। २. नखाः। ३. कबरीभारम्। ४. चुन्नी इत्याख्यं वासः। ५. निबिडम्। निर्गतमन्तरादिति निरन्तरम्। ६. दयितस्य संमुखे। ७. लिपस्टिकपदार्थेन। ८. अधराः ९. कमलपत्राकारेण वस्त्रनिर्मितव्यजनेन।

दत्तावलम्बनाः कथमपि पुरः प्रसर्पितुं प्रभवन्त्यः कुतुकोत्तान-लोचनैः कुसुमबाणबाणायमानैः कटाक्षवीक्षितैर्भ्रूविक्षेपैश्च स्मित-सुधाधारा-धवलिताधरान् दरदलित-कुन्दकान्तदन्तान् दुग्धोदधि-फेनपटल-धवल-वसन-सुवेषान् पुरुषान् मोहयन्त्यः,क्वचिच्चम्पक-कलिकाकलाप-गौर-वर्णा नव[1]-लीनकादि-सूक्ष्मपटीं परिदधाना अपहृतसुरसुन्दरीसौन्दर्याः कान्ततर-तारुण्य-नूत्नावतारा बाल-कन्दुक-चारुकुच-विलुलित-मुक्तामालाः स्फुरन्मणिहार-मरीचि-चक्रवालाः पुरबालाः कल–काञ्ची–क्वणितैर्मञ्जु–मञ्जीर-शिञ्जितैश्चेतस्ततो गच्छतोऽपि जनानाह्वयन्त्य इव विचरन्त्यः, क्वचित् कालायस[2]-कल्प-सूक्ष्म-निचोला[3]वृतशरीराः परिधानी-कृतस्यूतवरा[4] यामुने जले मीनमिथुनमिव तत्र स्वचञ्चलाक्षि-युगलं भ्रामयन्त्यश्चर्मपादुकाभ्यां[5] पटपटाकुर्वत्यश्च गमनेऽपि हरिणतरुणीरतिशेरते स्म। क्वचिच्च कविजनवाच इव मधुर-ध्वनिं नाटयन्त्यः, प्रकामं रसपीयूषप्रपां प्रसारयन्त्यश्च परार्थ-निष्ठा विहित-क्षणारम्भा वसुन्धरा-रम्भाः समवर्तन्त। अत्र काचन प्रावृड्लक्ष्मीरिव पीनपयोधरा, अन्या छन्दःसाहितीव तनुमध्या, परा साहित्यविद्येव सरसाऽलङ्कारध्वनिगुणोपेता चाप्सरायमाणा स्वैरमेकाकिनी परिभ्रमन्ती लोकान् प्रीणाति स्म। एवं तत्र गोचरी[6]कृतानैकनीवृता विविधा अभिनव-शालीनत्त्व-शोभिताश्चत्वरे चत्वरे स्वच्छन्दं विहरन्त्यो धरणी-

---

१. नाईलोन-टेरालेनादिक-वसनानि। २. लौहः। ३. यवनीनां देहावरणवसनं 'बुरका' इति ख्यातम्। ४. स्यूतं='सलवार' इति नाम्ना प्रसिद्धं जघनवसनम् ५. 'चप्पल' नाम्ना प्रसिद्ध-पादुकाभ्याम्। ६. गोचरी-कृता=दृष्टिविषयीकृता नैकाः=अनेकाः, नीवृतः=जनपदाः याभिस्ताः, तथोक्ताः।

तलतिलोत्तमा नेत्रातिथितामायाताः। किमन्यत्, तत्र हि प्रति-चतुष्पथं प्रतिविपणि प्रतिपथं प्रसाधितकचाः समुन्नतकुचाः कौमारात् परेण वयसा समालिङ्गिता गलविलुलितमणिमाला मसृणकेशजाल-चोचुम्ब्यमान-कपोलाः पटवास[1] - वासित-पार्श्व-देशान्तराला गर्वातिरेकेण स्वयं स्वस्मिन्नप्यसंनिविशमानाः परि-धृतवारवधूपरिधाना निर्भीकतामभीकता[2]ञ्चटुलताञ्च दधाना वृष-मूत्रिकाङ्कित-विलसद्वर्णवतीं पाश्चात्त्य[3] - भारतीं मिथो वदन्त्यः, पथि पथिक-कर-स्पर्शमात्रेणापि वशीकरण–मन्त्रोच्चा-रणमिव सीत्कारं प्रकुर्वत्यः कृतकृतककोपा[4]स्तन्वङ्ग्यः क्षणं कटाक्षविक्षेपैः, क्षणं जघन-नितम्बवेपनपुरःसरं त्वरितगमनैः, क्षणं निर्निमित्तं स्तनावरणापसारणैः,क्षणं सुधामधुरालापसन्तानै-श्च मुहुर्मुहुः कृतदक्षिणाक्षिसङ्कोचान्, मुखधृतधूमवर्तिकान्[5], पुटविधृत-प्रसाधनिकान्[6], श्यामश्यामैः शिरोरुहैः शोभमानान्, स्मरापस्मारसञ्चारसमपसृतचित्तान्, विरचित-चाटु-वचन-प्रप-ञ्चान्, अन्योन्यांसप्रणिहित–हस्तसरसिजान्, पटवासाञ्चितपटा-ञ्चलेन क्षणे क्षणे मुखं प्रोञ्छतो नवयुवक-कुरङ्ग-शावक-समूहान् बध्नन्ति स्म। सत्यं हि तदानीं तत्र युवतीनामतनुतुङ्ग कुचा-चलशिखरमवाप्य पिनाकिनोऽपि निर्विशङ्को मदनदेवो लोक-त्रयदुर्धरः सन् सततं परिभ्रमन्नासीत् इत्यमन्ये। अत एव हि तत्र दुग्धफेनधवलकञ्चुकाञ्चित–भुजङ्ग[7] – गणावरुद्ध–सञ्चारप्रचारे

---

१. पटं वासयतीति पटवासः, गन्धतैलम् 'इत्र' इति नाम्ना प्रसिद्धम्। २. कामुकताम्। ३. अंग्रेजीभाषाम्। ४. कृतकृत्रिमक्रोधाः। ५. सिगरेट- इति हिन्दीभाषायाम्। ६. केशमार्जनी। 'कंघा' इति हिन्दी-भाषायाम्। ७. सर्पाः विटाश्च।

वराकी कुलललनापि परवशा इव नकुल[१]-पालनमेव श्रेयस्करं मम्मनीतीति वहुशो वृद्धलोकैः श्रुतम् ।

## देहल्यां पुरुषाः

**16.** हन्त, यत्र प्रायशः प्रियदर्शीव-प्रियदर्शनः पुरवासि-पुरुष-समवायोऽपि कुम्भकार इव सुख[२]-रोचितः प्रखर[३]-धिषणश्च, शिव इव परमहसित[४]-श्रीर्वाम[५]देवश्च, राम इव ससुग्रीवः[६] सुमित्रोपासकश्च[७], विष्णुरिवेन्दिरासहायो[८] जनार्दनश्च[९] देवकी-नन्दन इव गोपालो[१०] मदनजनकश्च[११], कन्दर्प इव दर्पको रति-

---

१. कुलपालनं न=कुलमर्यादासंरक्षणं न स्वहितकरं मन्यन्ते विटानां स्वाच्छन्द्यात् । सर्पपक्षेऽथ नकुलानां=नेवला इति हिन्द्यां प्रसिद्धानां जन्तूनां पालनमेव श्रेयस्करं मन्यन्ते । यतो नकुला हि सर्पान् भक्षन्तीति सर्वविदितम् । २. पुरवासिजनपक्षे पदच्छेदः सुख+रोचितः इति । कुम्भकारपक्षे च सु+खरोचितः इति । ३. पुरवासिपक्षे प्रखरा धिषणा यस्य सः, कुम्भकारपक्षे च प्र-खरस्य धिषणा इव धिषणा यस्य सः इत्यर्थो नेयः । ४. पर-मह सितश्रीः, परमहसित-श्रीः इति च पदच्छेदः "मह उद्धव उत्सवः" इत्यमरः । "सितमवसिते च वुद्धे धवले त्रिषु, इति मेदिनी । ५. वामेषु=श्रेष्ठेषु, देवः=द्योतो यस्येति शिवपक्षे । वामं=धनमेव देवो यस्य स इति पुरवासिपक्षे । 'वामं धने हरे पुंसि' इति कोषः ६. सुग्रीवनामकेन कपिराजेन सहितः, सुन्दरग्रीवया च सहितः । ७. सुमित्रायाः=लक्ष्मणमातुः, सुन्दरमित्राणाञ्चोपासकः । ८. इन्दिरा=लक्ष्मीः, भारतप्रधानमन्त्रिपदमधितिष्ठन्ती इन्दिरा देवी च ९. जनो=जन्म तदर्दयतीति विष्णुपक्षे, जनैरर्द्यते=याच्यते । अथवा जनान् अर्दयति=पीडयतीति पुरवासिपक्षे १०. गवां=धेनूनां वाचां च पालकः । ११. प्रद्युम्नस्य पिता, कामोत्पादकश्च ।

प्रियश्च, बलदेव इव कामपालो रोहिणीनन्दनश्च[१], इन्द्र इव पुरुहूतः[२] सुराधिपश्च[३], भरत इव भ्रातृवत्सलो रामाराधकश्च[४], नीचजन इव स्वार्थी[५] कुचेष्टा[६]राधनश्च, पार्वतीनन्दन इव शक्तिधरः[७] कुमारश्च[८], गरुत्मानिव लसत्-सत्पक्षो विनतानन्ददश्च[९], मेघकाल इव मुदिरो[१०] घनोपलसित-शोभश्च[११], स्त्रीसमाज इव प्रमदो[१२] रसना[१३]भोग-भासुरश्च,

---

१. रोहिण्याः नन्दनः=सुतः इति बलदेवपक्षे। रोहिण्यो=गावः ताः नन्दयतीति रोहिणीनन्दनः इति नागरिकपक्षे। टुनदि समृद्धौ इति धातोर्ल्युः। 'नन्दनमिन्द्रोद्याने, नन्दनस्तु तनये हर्षकारिणि' इति हैमः। २. पुरूणि=बहूनि हूतानि=नामानि अस्येति शक्रपक्षे। पुरु=प्रचुरं, हूतम्=आह्वानं समासमित्यादिष्वस्येति पुरवासिपक्षे। ३. सुराणां=देवानां, सुरायाः=मदिरायाश्चाधिपः। ४. रामस्य=दाशरथेः, रामाणां सुन्दरस्त्रीणां चाराधकः। ५. आत्मनः एव कार्यसाधकः, धनार्थी च। ६. 'कुत्सित-चेष्टाराधनः, कुचौ एव इष्टाराधनभूतौ यस्येति च। ७. शक्तेः=एतन्नामकायुधस्य धारकः, बलस्य धारकश्चेति पुरवासिपक्षे। ८. कुमारयति=क्रीडतीति कुमारः। कुमार क्रीडायाम् (चु. उ. से.) इति धातोः पचाद्यच्। वा कौ मारयति दुष्टान् इति कुमारः इति कार्त्तिकेयपक्षे। कुत्सितो मारः अस्येति पुरवासिपक्षे। ९. विनता=गरुडमाता, तदानन्ददः-इति गरुडपक्षे, विनतेभ्यः आनन्दं ददातीति पुरवासिपक्षे। १०. मोदन्तेऽनेनेति मुदिरः इति मेघकालपक्षे। मुदिरः=कामुकः इति नागरिकेऽर्थे 'मुदिरः कामुको मेघे' इतिकोषकाराः। मेघपक्षीये मुदिरे मुदहर्षे इति धातोः 'इषि मदि मुदि०' इति किरच्। ११. घनैः=बादलैः उपलसितशोभः इति मेघपक्षे। घनोपलैः=करकैः इव सितशोभः इति नागरिकपक्षे। १२. प्रकृष्टमदयुक्तः। 'प्रमदः समदे मत्ते स्त्रियामुन्मद-योषिति' इति मेदिनी। १३. जिह्वा काञ्ची च।

नर्तकजन इव सघनः[१] पृथुलास्य[२]-सुन्दरश्च । किमन्यत्,साहित्य-विषय इव सरसः, वेदविलास इव सदासवसमुपेतः, व्याकरण-ग्रन्थ इव बहुरूपसमादृतः, आयुर्वेद इव पुरुषपरीक्षकः, कोष इव नामपूर्णः, वैशेषिकविशारद इव द्रव्यगुणविशेषज्ञः, नैयायिक इव कर्तृप्रधानः, मीमांसक इव कर्मकुशलः, साङ्ख्यविदिव प्रकृति-शोभनश्च । हंहो यत्र अविद्याधरो[३]ऽपि विद्याधरः[४], अमुक्ता-मयोऽपि मुक्तामयः[५], विशारदोऽपि[६] सुशारदः, गौरवर्णोऽपि घनसार[७]–रुचिश्रीकः, इला[८]-श्रितोऽप्यनिलाश्रितः, बलान्वितो-ऽप्यबलान्वितः, अनङ्गरागोऽपि नवाङ्गरागश्चेति विचित्रां विरुद्धसंस्कृतिमादधानो लोकः काममप्यमन्दां मुदं सञ्चारयति स्म मानसे ।

## विकृत-संस्कृतितश्चिन्ता

17. एवं हि तत्र शिथिल-केशबन्धनावनद्ध-प्रसूनस्तबक-तरुणी-भ्रूभङ्ग-भूरिभाव-प्रभाव-पराभूत-चित्तान्, विविधव्यापार-व्यव-हार-समर्जितधन-न्यक्कृत-धनद-वित्तान्, नैकविधासव-पान-मोद-सन्तान–मत्तान्, पारस्परिक–स्नेहसूत्र–वशीभूत–मनोयोगान्, मन्दिर–प्रासाद–हर्म्य-शृङ्गाटक[९]–विरचित–सुखभोगान्, भार-

---

१. सघनः=घनमिति वाद्यविशेषो नर्त्तकपक्षे । सघनः=सुदृढः इति नागरिकपक्षे । "घनः सान्द्रे दृढे दार्ढ्यें·· नृत्तवाद्यप्रभेदयोः" इति हैमः । २. पृथु–लास्येन सुन्दरः इति नर्त्तकपक्षे । पृथुलेन आस्येन सुन्दरः इति पुरवासिपक्षे । ३. विद्याधरजातिभिन्नोऽपि । ४. विद्यानां धारकः । ५. मुक्तामणिमयः, रोगरहितश्च । ६. विगता शारदा यस्मात् स विशा-रदः, तथा विशिष्टा शारदा यस्य सः इति च । ७. घनसारः=लोहसार-रुचिशोभः, कर्पूरशोभश्च । ८. इलायां=भुवि लोकैः आश्रितः । ९. शृङ्गाटकं=चतुष्पथम् ।

तीयसंस्कृति-वियुक्तान्, वीतशोकान् पुरलोकान् लोकं लोकं मन-स्तोदेन चर्व्यमाण इव, मार्यमाण इव, ग्रस्यमान इव, आस्वाद्य-मान इव चाचिन्तयम्– हन्त यत्र पूर्वे यौधिष्ठिरे प्राज्ये राज्ये भगवन्नामनादैः पूर्यते स्म गगनतलम्, अविरतं वाद्यन्ते स्म मन्दि-रेषु घण्टावाद्यानि,अनुपलं पूरयन्ति स्म श्रुतिघोषाः श्रवणयुगलम्, सततं वितीर्यते स्म भीमार्जुनभीष्मद्रोणप्रमुखैः शौर्यश्च । तत्रैवाद्य स्फोटयन्ति चीत्कारमया बलात्कारमया हिंसनमया आरावाः कर्णौ, अपह्रियन्तेऽथ स्त्रियः, निपात्यन्ते सदाचारविचाराः, विलोप्यन्ते प्राचीनपरम्पराः, अवहेल्यन्ते सदाचारिणः, तिर-स्क्रियन्ते ब्रह्मचारिणश्च । किमन्यत्, यत्र पुरा यज्ञशालाभ्यः समुद्भूतो धूमो लोकानां बाह्यशरीरमन्तःशरीरञ्च विमलीकुर्वन् गगने वायुमण्डलमपि निस्तमस्कं[1] चरीकरीति स्म, तत्र साम्प्रतं स्थाने स्थाने विभिन्नवस्तुनिर्माणशिल्पशालाभ्यः समुद्गतो दुर्धूमः प्रतिपुरुषं तन्मुखविवरविनिःसृतश्च बीडीसिगरेटेत्यादिनामजुषां शलाकाखण्डानां धूमो देहं वायुपरिसरञ्च दूषयतितराम् । राम ! राम ! अस्मदीयास्तु ग्रहा एव अननुग्रहाः, दिष्टमेवानिष्टम्, अवितर्कणीयो दैवोपघातः, इत्याद्यरुन्तुदं विचारं शोचं शोचञ्च कामुकजनानुबध्यमान-कुलतरुणी-जनविविधापशब्द-क्षुब्ध-हृदयो-ऽहमापराह्णं भ्रमित्वाऽऽवश्यकीं दिवातनीञ्च सर्वां क्रियां सम्पाद्य दिल्लीनगरीये रैलशकटिकास्थितिस्थाने पुनरागत्य च तां प्रतीक्षमाणोऽतिष्ठं सभार्यः ।

## देहलीतो हरिद्वारमभिप्रस्थानम्

**18.** अथ क्षणेनैव समागतायां हरिद्वारमभिगामिन्यां रैलश-

---

१. निस्तमस्कं=पापरहितं शोकरहितं वा । 'तमोऽन्धकारे स्व-र्भानौ पापे शोके गुणान्तरे' इति हैमः ।

कटिकायां, तत्र उत्तिष्ठत उत्तिष्ठत त्वरितम्, अपसरत अपसरत परतः, उपसरत उपसरत पुरतः, संयोजयत संयोजयत स्वसम्भारान्, वेष्टध्वं वेष्टध्वं शयनस्तरणम्, संवृणुत संवृणुत मञ्जूषाम्, उद्वहत उद्वहत शिरसि सम्भारभारम्, परित्यजत परित्यजत पन्थानम्– इत्यनेकविधप्रस्थानाकुलितलोककोलाहले समुद्भूते कुलीनजनसहायोऽहमपि पाणिगृहीत्या समं शकटीं ससुखमध्यासि। अरुणायमानेषु दिगन्तरेषु, श्यामायमानेषु च प्रदोषक्षणेषु तद्यानं सप्तर्षितारा कर्बुरां[1] काष्ठां प्राचलत्। विजृम्भितेऽथ पयोदत्विषि गाढान्धतमसि महता जवेन धावन्ती शकटिका सा स्वागतार्थमिव मध्येमार्गं समुपस्थितान् मेरठ-मुजफ्फरनगर-सहारनपुर-प्रभृति-पत्तनविशेषान् जलग्रहणादिभिः पेप्रियती[2]वाथ च समुदिते निजसारथि-सहोदर-रिपु-सोदर्य-भांसि तमांसि समूलं समुन्मूलयितुं भगवत्यरुणदेवे पुण्यप्रचारं हरिद्वारं समुपागच्छत्।

## हरिद्वार-वर्णनम्

**19.** इयं हि हरिद्वारवसुन्धरा जगदुपरि वरीयसी परमश्रेयसी सुकृतिजन-प्रेयसी निखिल-तीर्थस्थलगरीयसी भगवन्नामलीलालीलायमाना नवसृष्टिनिर्माणपरेण विश्वामित्रेणापरसुरवसतिरिव विरचिता, उत्तुङ्गकलशैर्देवमन्दिरैर्वाराणसीव शोभिता, अविरतप्रवृत्तकीर्त्तनध्वनिमुखरित-गगनाङ्गना, अनधीतसाहित्य-शास्त्र-व्यक्तिरिव अदृष्टालङ्कृतिध्वनिगुणा, कलिकाल-प्रभाव-प्रबलदुराचरण-दूरीकरणायावतीर्णेनेव धर्मराजेन विद्वज्जनेन परिवृता, क्वचित् करगृहीत-फलपुष्पभाजनैर्भगवन्नामशब्दनैः[3]

---

१. उत्तरदिशम्। २. प्रीणितान् कुर्वतीव। यङ्लुगन्तात् प्रीधातोः स्त्रियां शतृ। ३. शब्दकरणशीलैः। शब्द शब्दक्रियायां (चु० उ०) धातोर्युच्।

स्त्रीजनैः शोभनीकृततटप्रान्तया, क्वचित् तटमुभयतः समाकर्ण्यमान–सिस्नासुजन–कोलाहलया, क्वचित् शिशिरतरतरङ्ग–प्रभञ्जनान्दोलित–जनहृदयया, क्वचित् समुत्फुल्ल–पल्लवित–वल्लरी-सन्तति-मण्डपच्छायया, क्वचित् तटमुभयतो विकसित-तरु–सुरभित–श्वसन–विचालित–कदलीदलया, क्वचिदुपकूलं विकीर्णप्रसूनैस्तरुभिरिव पूज्यमानया, क्वचित् फलपुष्पभारावनताग्रैस्तरुस्कन्धैरिव नमस्क्रियमाणया, क्वचित् सन्ध्यावन्दन-सम्पादन-परिकल्पित-कुशासन-वसुधासुधाशनजन[1]– सनाथपुलिनया, क्वचिन्मज्जदुन्मज्जल्ललनाजन-घनजघनाघातावरुद्धप्रवाहया, क्वचित् सलीलसीमन्तिनी-नितम्बबिम्बाहति-चञ्चलीकृत-कल्लोलया,क्वचित् स्नानावतीर्ण-विविध-विषयसुन्दरीसुन्दराङ्ग-राग-बिन्दुसन्दोह-स्तवकिततोयया, क्वचिज्जलकेलिरत-तरुणीजन-सरिदावर्त–सनाभि–नाभि–निपीत–पानीयया[2] स्वर्गसोपान-श्रेणीयमान-रङ्गत्तरङ्गया गङ्गया पूततामानीता वरीवर्त्ति स्म। या हि सावित्रीव सत्याश्रिता[3], मैत्रेयीव[4] परमादर्श-दर्शन-सम्भृता, यशोधरेव[5] सर्वज्ञ[6]- सम्मता, रोहिणीव द्विजपति[7]-प्रीणिता, लक्ष्मीरिव पुरुषोत्तमा[8]धिगता, सुमनोमनोवृत्तिरिव सत्कर्मसङ्गता, कविकृतिरिव शुद्धवर्णध्वनिगुञ्जिता च। अथ यत्र तरलता जलेषु, सरागता अधरेषु, कुटिलता केशेषु, भोगिता सर्पेषु, स्नेहशून्यता गेहप्रदीपेषु, वृत्तिविवादः साहित्यिकेषु, वृत्त-भङ्गश्छन्दोरचनासु,अस्थिरता देवालयध्वजेषु,क्षयश्रुतिः पञ्चाङ्ग-पाठेषु, द्विजराजशत्रुता कमलेषु, मित्रसापत्न्यं कुमुदराजिषु,

---

१. भूदेवाः। २. जलभ्रमर-तुल्यनाभिपीत-जलया। ३. सत्यवान् राजा, सत्यञ्च। ४. याज्ञवल्क्यभार्या। ५. बुद्धस्य पत्नी। ६. बुद्धदेवः पण्डितश्च। ७. चन्द्रः ब्राह्मणश्च। ८. विष्णुः श्रेष्ठपुरुषश्च।

मालिन्यं कर्दमेषु, भुजङ्गता भुजङ्गेषु, उन्मत्तता पादपेषु न पुरुषेषु, चपलता लतासु न वनितासु, स्फोटो वैयाकरणेषु न जनमानसेषु, विरोधं आलङ्कारिकेषु न गृहेषु, सिद्धान्तः[१] शास्त्रेषु न योगिजनाश्रमेषु, शरसम्पातो ज्योतिष्केषु न मृगयासु, व्यभिचारिभावो रसनिष्पत्तौ न समाजे, रेफोच्छ्रायो[२] वर्णलिप्यां न निवासिलोके, सन्निपातो भैषज्यशास्त्रे न चातुर्वर्ण्ये, अधोगमनश्चाखूनां न नराणाम् । निश्चयेन सुरासुर-जेगीयमान-यशोवैभवा सेयं पुण्यस्थली हरिद्वार-वसुन्धरा पूर्णाधारभूता सच्चारित्र्यस्य, निदानं सत्कार्याणाम्, विहारधरा भगवत्कथानाम्, शरण्यभूता सुकृतीनाम्, पीठस्थली च धार्मिकप्रवृत्तीनाम् ।

## हरिद्वारे गङ्गातटम्

**20.** एवंविधां निखिलतीर्थस्थलीनिकषायमाणां महीय्यमानां[३] पावनपुरीमुपेत्य कृतार्थमिवात्मानं मन्यमानोऽहं गङ्गाकूलं समया चिरपरिचितायां सशालायामपि विशालायां धर्मशालायां प्राप्तातिथ्यः सिस्नासुः सुरसरिदुपतटं कान्तया सार्धमगमम् । हन्त तत्र तु वर्त्तमानाभिनव-संस्कृति-संस्कृताभिर्जनताभिः प्रणम्य-हरिहर्म्य[४] - स्पर्धिस्थानमपीदं प्रायः स्वविहारस्थलीकृतमिव दृग्गोचरीभूतम् । यतस्तत्र बहुत्र तटेषु मनोभवभावभूयिष्ठं प्रकृष्टं स्वेष्टं शात[५]मनुभवितुं शीघ्रायमाणा वक्षोजप्रमाणाच्छजले स्रोतोवहाप्रवाहे प्रविश्य शीतलजलविलासलीलान्धाः,शिथिल-

---

१. सिद्धान्तः=निर्णीतविचारः, पक्षे सिद्धानां=साधुपुरुषाणाम् अन्तः-मृत्युः । २. रेफाः=निकृष्टाः तेषामूर्ध्व-स्थितिः । ३. पूज्यमानाम् । महीय्यते इति महीय्यमाना । महीङ् पूजायाम्, इति कण्ड्वादिधातोर्यान्तात् कर्मणि लटि पुनर्यकि, अतो लोपे शानचि मुक् । ४. वैकुण्ठलोकः । ५. सुखम् ।

जलक्लिन्न-कवरीबन्धाः, स्खलित-चीनांशुक-दृष्ट-शरीररन्ध्राः, स्पष्टदरीदृश्यमान-कुम्भानुकारि-पीनस्तनाः, पृथग्विध-विषय-वासिन्यः सुरसुन्दरीसुन्दररमण्यः क्वचिन्नागाङ्गना इव विष[1]-गण्डूषमुद्गिरन्त्यः, क्वचिच्चकोर-तरुण्य इव शीतकर-किरण-निकर-निर्मल-शीतलजलमास्वादयन्त्यः, क्वचित् कौमार्यक्रीडा-मुपगता इव सम्पुटित-कर-युग-रन्ध्रै र्नीरधारां समुच्छालय-न्त्यो व्यात्युक्षीं[2] वितन्वत्यश्च स्वात्मानमभिषिषिक्षद्भि[3] रपि परितः स्मितमधुरां दृशं सङ्किरद्भिरुपतटं सञ्चरद्भिर्नाति-निगूढ-युवतिजन-चम्पक-दलावदात–गात्र–समवष्टम्भ–दृष्टिभि-र्मदनपरशैरिव र्निनिमेषैः सुवेषैर्नदीष्णैः[4] सतृष्णैः पुरुषैः कामं पीयमाना इव, हृदि निगृह्यमाणा इव, शिरसि धार्यमाणा इव, बाहुभ्यां परिरभ्यमाणा इव जलविहरणपरायणा अनल्पा अर-विन्दारुणवदना रतिसदना सीमन्तिन्यो विहरन्त्य आसन् । यत्र कुत्र तु सुरसरिति जललीलाविलीनानां महिलानां पयः-पूर-प्रवाहैः परिधानवसनेषु परिस्खलितेषु तटोपकण्ठं समुपस्थितेषु पुरुषेषु च नितम्बाभोगसक्तनयनेषु वीचिहस्त[5]–समानीतेन प्रव-हत्पर्णवसनेन प्रियसखीकृत्यमिवापाद्यते स्म । तत्रैव च नदीकूले प्रातः सायं विकस्वरेन्दीवरोल्लसल्लोललोचना काचन भग-वन्मदनदेव–विलासोल्लास–विलसित–विविधविचारा रोममा-

---

१. जलं गरलञ्च । २. परस्पराभ्युक्षणम् । व्यतिहारेण उक्षणं व्यात्युक्षी । 'कर्मव्यतिहारेण च स्त्रियाम्' इति णच् । णचः स्त्रियामञा-देशः । 'टिड्ढाणञ्' इत्यादिना ङीप् । ३. अभिषेक्तुमिच्छद्भिः । अभि+षिच् क्षरणे इति सन्नन्ताद्धातोर्लटः शत्रादेशः । ४. नद्यां स्नान्तीति नदीष्णाः तैः । क प्रत्ययः । 'निनदीभ्यां स्नातेः कौशले' इति च षत्वम् । नदीतरणनिपुणैः इत्यर्थः । ५. वीचिरेव हस्तः, तेन समानीतेन ।

र्जन्या[1] सदन्तपिष्टकविलेपनं[2], दशनधावनं विदधती स्वैरविहारमेकाकिनी तनोति स्म। अपरा केसरिकटि-कान्ति-विजित्वर-श्रोणिभारा प्रविरचित-विभिन्न-शृङ्गारसारा सपरिवारा विचरति स्म। अथान्या प्रणयोत्कलिका[3]-कल्लोलालिङ्गितावयवा दयितांस-निहित-कोमलकरतला शाखिसमालिङ्गितां छल्ली[4]-मिवानुकुर्वती लोकानाह्लादयति स्म। एवं प्रतिदिनमेव तत्रानेका भूमेनकाः स्वदयितैः सह ससुखं स्पर्शनं[5] सेवमाना भ्रमन्ति स्म।

हन्त, तत्र सरित्तीर-विहरण-व्यसनिनः पयःफेनजालानीव धवलभांसि वासांसि दधानाः सकामकामिनी-कमलकोमल-कर-गृहीतकरा नरकिन्नरा अपि द्यवि गन्धर्वा इव विचरन्तश्चेतसि विस्मयं, वपुषि रोमोद्गमं, वचसि सीत्कारं, शिरसि कृतज्ञता-भारं, वक्षसि हर्षातिरेकञ्चोद्वहन्तः किन्तु कतिचन समुन्नमित-भ्रूलतैः सलज्जैः स्त्रीजनैश्च चलद्विलोचनान्तैर्धिक्कुर्वन्तोऽप्य-वर्त्तन्त।

**21.** एवंविधे व्यतिकरेऽपि तत्र सायङ्कालिकङ्कमनीयं दृश्यन्तु सदैव किमप्यद्भुतमानन्दथोर्विजृम्भणश्चरीकरीत्येव। "हर की पैडी" इत्याख्ये विख्याते स्थाने तु भगवत्या भागीरथ्या नीराजनम् (आरती) इति नामकं दृश्यं विचित्रामेव शान्तिसन्तर्तिं सर्वदा तन्तनीति। तटेषु यात्रिणो विविधकुसुमशोभिताः सदीपा नवदलमयीर्नावः क्रायङ्क्रायम्प्रवाहे च प्रक्षिप्य सुदूरङ्गच्छन्तीर्दर्शं दर्शं सुचिरममन्दम्मोदं विन्दन्ति नित्यम्। अथ च तत्रैव

---

१. 'टूथब्रुश' इतिनाम्ना प्रसिद्धया। २. टूथपेस्ट' इति नाम्ना प्रसिद्धं विलेपनम्। ३. उत्कलिका=उत्कण्ठा। ४. वल्लरीम्। 'छल्ली वीरुधि सन्ताने वल्कले कुसुमान्तरे' इति मेदिनी। ५. पवनम्।

कुत्रचित् शङ्खध्वनयो वितन्यन्ते, कुत्रचिद् घण्टा वाद्यन्ते, एकत्र स्तोत्राणि समुच्चार्यन्ते, परत्र गङ्गाम्भांसि पूज्यन्ते, अन्यत्र वासांसि दीयन्ते, अपरत्र च भिक्षुका भोज्यन्ते। पुनः कुत्रचित् कुशासनासीनैर्बद्धसिद्धासनैर्वसुधा – सुधाशनैर्गङ्गास्तवास्तन्यन्ते, कुहचन ललनाजनैर्मङ्गलगीतानि गीयन्ते, कुत्रचन भगवत्कथाः कथ्यन्ते चैवन्तत्राभिनव-संस्कृति-साम्राज्यकालेऽपि तदानीन्तन्मनस्का लोकाः सातत्येन ब्रह्मावाप्तिसहोदरं सुखं क्षणं समनुभूय स्वजनुषः कृतकृत्यताम्मन्यन्ते। किमन्यद् यदम्बुप्रवाहे त्रिदोषनाशाय मज्जन्तोऽपि जनाश्चतुर्दोषो[1] जायन्ते। किन्त्विदमपि मनस्तोदकरङ् कुकर्म दृष्टं यत् तत्रासकृन्मज्जन्नव-नवाङ्गनाजनाङ्गानुलेपनामन्दामोह–सुरभित–तरल–तरङ्गायाङ्गङ्गायां न केवलं फेनिलेन[2] मलिनवसनान्येव क्षाल्यन्ते, अपितु तत्र नगरपरिषदा मूत्रपुरीष-पूय-रक्त-नख-केशराशयोऽपि निःशङ्कं नित्यं निपात्यन्ते, येन यदाकदा पूतिगन्ध-गन्धवहेन भ्रू नासाक्षिसङ्कोचमपि कुर्वन्तोऽवलोकिताः कियन्तो लोकाः। परं मन्ये निखिलजीवजन–वृजिन–निवह–निरसन–निपुण–पानीयस्पर्शेन तत्सम्बन्धिनः प्राणिनोऽपि निश्चप्रचं स्वर्गं लभन्त एव, यतोऽत्र पण्डितराजः[3] प्रमाणम्।

## हृषीकेश-सुषमा

**22.** अत्राहङ्गङ्गोत्तरीयतीर्थस्नानसमुत्कः केवलं दिनद्वयमेवोषित्वा मरुत्तरयानेन भू-सुरलोकायमानं रमणीयस्थलेशं हृषीकेशमव्राजिषम्। तत्र च कृष्णकम्बलीयमहात्मनो धर्मशालायां स्थानमलभे। इह हि भिक्षाङ् ग्रहीतुमागतानां तपस्त्याग-सम-

१. चतुर्भुजाः, विष्णुसारूप्यभूताश्च। २. 'साबुन' इति नाम्ना प्रसिद्धेन। ३. गङ्गालहर्यां पण्डितराजः जगन्नाथः।

र्जित-भव्यतेजसां षड्‌र्मि-समुल्मूलन-संलग्नमनसां पुण्यजुषां समुपोढतपसां तापसानां दर्शनेन धन्यान् मन्यन्ते नित्यमात्मनो यात्रिणः। इदं हि हृषीकेशं गङ्गोपकण्ठं स्थितं परमां रमणीयतां कलयति। यत्र सरित्तटे बहवः पुण्यभाजो जनाः स्थाने स्थाने भगवतः पुण्याः कथाः कुर्वन्ति। निश्चयेनेयमपि तीर्थस्थली सुतरामाधारधरा धार्मिकप्रचाराणां, सिंहसन्ततिर्मद्यत्तिष्य[1]मतङ्गजानां, समुत्पत्तिः सत्प्रवृत्तीनां, सोपानश्रेणिः सुरपुराध्वनीनानां, कुलवसतिः शुभाचाराणां, परमविपत्तिर्नीच-प्रवृत्तीनां, शुभसंहतिः सिद्धिसञ्चितीनां, दावदीधितिश्च कलिकलुष-किसलयानाम्। यत्र सुरसरित्तटे स्नानार्थं पानार्थं चागच्छतां तनुभृतां प्रतिपदमश्वमेधादिसवानां फलं न दुर्लभमिति गदन्ति जगन्ति। किन्तु हन्त! तत्रापि कलिकालप्रभावान्नासीदभावः स्वैरविहारमातन्वतामपि देहभृताम्।

## गङ्गातटे स्त्रीणां स्नानम्

23. निःसन्देहमिदमपि तीर्थस्थलं विलासस्थलमिव कृतं तैस्तैः स्वैरविहारिभिरित्यन्वभवम्। यतस्तत्रैकतोऽनुनदीतीरं[2] निज-मुख-समुदीरित–भगवन्नामामृत–सञ्चारा अप्येकहायन–द्विरद–सञ्चलन[3]- वल्गु–स्पन्दन–शोभमान–स्तनकलशभाराः, विलास-विलोल-विलोचन-सञ्चारित-मार-सम्भाराः,वामचरणतलदलित-शचीसौन्दर्यसाराः, शीकरक्षोदशीतैर्वीचिवातैः[4]कण्टकियावयवाः,

---

१. कलिः। 'तिष्यः पुष्ये कलियुगे' इत्यमरः। २. नदीतीरे। विभक्त्यर्थेऽव्ययीभावः। ३. एकः हायनो यस्य स एकहायनः। स चासौ द्विरदः=एकहायनद्विरदः। एकहायनद्विरदस्येव त्वरितं सञ्चलनं तेन। ४. शीकराणां जलकणानां क्षोदाः=चूर्णानि, तैः शीतैः वीचीनां तरङ्गाणां [जनकैः] वातैः=पवनैः।

अनङ्गरागपेशल-विशाल-लोचनाः[1], असुषीमकामाः[2] श्रीमन्मनसिज-वासभूमयो युवतयो यान्ति स्वच्छन्दं तत्रैवान्यतः कोमल-माल्यमालिनी-लावण्यावधूत-धैर्यप्रभावाः सुवास-वासित-वाससः स्फुरद्दीप्तयो नव्या नरा अपि मन्मथातपतप्ता इव चारुहासिनीनां नवयौवनोपवने विश्रान्तिसुखमनुबुभूषवः स्वैरं विचरन्ति। येषां कटाक्षवीक्षितैर्व्यथितहृदया काचन वृद्धा जलविहरणपरायणं वधूजनं कञ्चुलिकया स्तनयुगलं स्थगयितुं त्वरयति, अपरा कबरीभारमाकलयितुं कथयति, काचित् कपोलावलम्बिकर्णावतंसं सज्जयितुमवगमयति, परा श्लथीभूतां काञ्चनकाञ्चीं रोद्धुं वावदीति[3], कापि मस्तके चेलाञ्चलं पातयितुमुपदिशति, कापि च ज्ञातरहस्या वयस्या स्नानोत्तीर्णां परिधृतपरिधानामपि वपुःश्लिष्ट-जलक्लिन्नचेलान्तर्दृश्यमान-सर्वावयवतया निर्वसनामिवोपलक्ष्यमाणां संनतेक्षणां सस्मितमुपहसन्तीव किमपि सङ्केत्य सत्वरं कम्बलावरणं वरीतुं पिशुनयति[4]। पुनः काचन शिथिलीभूतां नीविं संयमयितुं[5] च स्मारयति। अथान्या वध्वा व्यपदेशवीक्षणं परिहरति, अपरा प्रवाहाभिमुखं गमनं रोरुधीति, काचन तां भगवन्तं विवस्वन्तं प्रणमयति, काचिद् भगवतीं भागीरथीं दुग्ध–चन्दन–सुमनोमिश्रैर्जलाञ्जलिभिरर्चयतीति तासां वचसां विलासैर्निमन्त्र्यमाण इव, समाकृष्यमाण इव अनुबध्यमान इव च यथासमयमहमपि पत्न्या सह तत्र सम्पादिताभिषेकक्रियश्चिरकृताह्निक-पूजापाठश्च धर्मशालां प्रत्यागत्य सद्यः सम्पादितं

---

१. अनङ्गरागेण=कामरागेण पेशले=रम्ये विशाले लोचने यासां ताः। २. असुषीमः=अशिशिरः कामः यासां ताः। ३. वदधातोर्यङ्लुकि लटि रूपम्। ४. सूचयति। ५. चौरादिकात् सं—यम वेष्टने धातोस्तुमुन्।

पीयूषायितं स्वशन[1]जातं सम्यगुदराभ्यन्तरीकृत्य समभिगत-रसास्वाद-समुत्पन्नसन्तुष्टिः स्वल्पं ससुखमस्वाप्सम् ।

## हृषीकेशे स्वास्थ्यविकृतिः

**24.** अथ मध्याकाशादीषदवतरति विवस्वति पयस्यापानेन पुनर्नवीकृत इव गङ्गोत्तरीयं गन्तुं शुल्काजीव[2]-माध्यमेन भाटकद्रव्यप्रदानपूर्वकं मरुत्तरव्यवस्थामकार्षम् । किन्तु हन्त, सायं सोपानपथेन प्रासादपृष्ठादवतरन्नहं हनुमत्साम्यमधिगन्तुमिव न जाने कथं पादप्रस्खलनात् पङ्गुत्वं प्राप्य सचीत्कारं भूमौ निपतन्तमात्मानं रोद्धुं नाशक्नवम् । स च चीत्काराराव: प्रासादमुपर्युपरि परिभ्रमन्तीं मत्पत्नीं रश्मिष्वादायेव, अङ्के गृहीत्वेव झटिति वातेन नीत्वेव चास्मत्पुरः समुपास्थापयत् । सत्यं हि कुलललनानां चेतः कुसुमसुकुमारं भवतीति कामं धीरस्वभावाऽपि सा मदीयां दशां विलोक्य किमप्यनर्थजातं चिन्तयन्ती साम्रेडं करेण मां संस्पृशन्ती, सकरुणं परं प्रलपन्ती, सोष्माण्यश्रूणि विमुञ्चन्ती, सखेदं सोद्वेगञ्च निःश्वसन्ती, स्वोत्तरीयाञ्चलेन वीजयन्ती सुभृशं त्रस्यन्ती, आत्मव्यथया परानपि पीडयन्ती कम्पमानावयवा, विस्फारितलोचना, परिव्यथितहृदया, स्वेदसलिलैः स्नपितेव, दुःसहशोकेन मूर्च्छितेव, दुष्टग्रहगणेन परिग्रस्तेव साध्वसपरवशाऽभोभवीत् । परं मुहूर्त्तेनैव लब्धचेतने मयि प्रत्यागतप्राणेव स्वेष्टदेवताभ्यो धन्यवादानर्पयन्ती, भगवत्पुरत उपयाचितं वितन्वती सहासं ससाहसञ्च मां सान्त्वयन्ती तत्रत्यं मदीयमेकं सुहृद्वरं पण्डित-प्रवरं मङ्क्षु समाहूय तन्माध्यमेन मम चिकित्सनप्रबन्धमचरीकारीत् । दिवसपञ्चकचारुचिकित्सया यावदहं स्वास्थ्यमलालम्भिषं गङ्गोत्तरीयस्थलञ्च पुनरजिगमिषि

---

१. सुन्दरभोजनम् । २. शुल्काजीवः—एजेन्ट इति नाम्ना प्रसिद्धः।

तावदेव न जाने कथं मदीया जाया भूतबाधितेव भ्रमिरुजाऽगृह्यत । अथ च यावत्तयाऽनामयताऽचीयत तावन्मयाऽभिनवेन कटिशूलेन सम्बन्धोऽस्थाप्यत । किन्तु कुशलचिकित्सकनैपुण्येन नातिचिरं व्यथामनुभूय भूय आत्मानं नवीनीकृतमिवाकलय्य तत्स्थानञ्च दुर्लक्षणं दुःशकुनसूचकञ्च निश्चित्य पूर्वपरिचिते स्वर्गाश्रम एव कतिचन दिनान्यध्युष्य स्वास्थ्यलाभचिकीर्षयाऽहं मरुत्तरयानेन तत्रागमम् ।

## गीताभवनमभिगमनम्

**25.** अथ तत्र परमसुहृद्वर्याणां विद्वत्पुरन्दराणां श्रीशर्मणां सौजन्येन विनाऽऽयासं मध्येगीताभवनं स्थानं लब्ध्वा त्रिगुणानि पञ्च दिनानि ससुखं वासमकल्पयम् । अत्र हि गीताभवनं, परमार्थनिकेतनं, स्वर्गाश्रमः इत्यादीनि स्थानानि परमां रमणीयतां कलयन्ति । यत्र भगवतः सुन्दरं मन्दिरं, विशदमुद्यानं, स्थाने स्थाने धवलारुण–पाषाणनिर्मिता आसन्द्यः[१] सुखासन्दिकाश्च[२], ताश्च परितो विकसितसुमा[३] मनोहरस्तम्बाः[४], मध्ये मध्ये च मध्येमार्गमुभयतः सहकार-राजाम्रा[५]र्जुनादिपादपाऽऽलिङ्गिता मन्दानिलान्दोलिता लतावितानाः हठान्मनो मोहयन्ति । अहरहरिह दिवस–सार्वभौम–शोभन–प्रस्थान–समुत्सवमुद्दिश्यापीत-पताकाञ्चलंवत् पर्यस्ते नमुचिसूदन-सदनदिसि[६] महौषसां प्रभाजाले सौस्नातिकै[७]र्भगवद्–विवस्वत्समागमनमङ्गलानीव गीयन्ते

---

१. वेत्रासनानि, कुर्सियां, इति भाषायाम् । २. सुखपूर्वकमास्यते अस्यां, ताः, 'आरामकुर्सियां' इति प्रसिद्धाः । ३. विकसितपुष्पाः ४. स्कन्धरहिताः लघुतरवः । ५. 'कलमी आम' इति नाम्ना प्रसिद्धं फलम् । ६. नमुचिसूदनः=इन्द्रः, तस्य सदनं=भवनं, तद्दिशि=पूर्वस्यां दिशि इत्यर्थः । ७. सुखस्नानप्रच्छकैः ।

भगवद्गीतानि। मध्येभवनन्त्वनुसवनं चासमारोपिताहम्भा-वैरुपशमस्वभावैरशरणशरण – भगवदरुणचरणसरोजध्यानादृत-भक्तिभावैर्वैराग्यैश्वर्यादिदिव्यविभूति – समेधमानानुभावैर्महानु-भावैरसकृद्भगवद्भजन–कीर्त्तन-श्रवण-कथन-प्रभृतिभिः कृतिभि-रपूर्वः कोऽपि परमानन्द-सन्दोह-प्रवाहश्च सञ्चार्यते।

## गीताभवन–सुखानि

**26.** अहन्त्विह सम्पूर्णमेव दिनं कदाचिन्नवनववनोपवन-पवन-परिरम्भणेन, कदाचिद् भगवच्चरणचिह्नितविशालभालानां तुलसी-रुद्राक्ष–मालाविलसद्वक्षःस्थलानां राम–नामाङ्कितोत्तरी-याणां महात्मनां प्रवचनाकर्णनेन, कदाचिदितस्ततः सुरस्रोतोवहां समया कन्दरासु विहितावासानां शम-दम-तपः-स्वाध्याय-सन्तोष-तितिक्षा-क्षमाणां, स्वसिद्ध-विशुद्धानुभावानन्दानाम्, अतिप्रवृद्ध-तपस्तेजोराशिवशीकृतसमागन्तुकानां, भगवत्परायणमानसानाम्, उभयांसलम्बमान–कल्माष–जटाजूटानाम्, अतिरुचिर-चरित–गरिम-परिकलित-कलेवराणाम्, अगणितवर्षवातातपतुहिन-पातानां, सकलसंसारसुखविमुखवृत्तीनाम्, अशाणोल्लीढमरकत-मणीनामिव गिरिरजसाऽनभिव्यक्तवर्चसां तपोजुषां दर्शनलाभेन, कदाचिच्च नैकविध–सीमन्तिनी–पीनपयोधर–भूधर-शिखर–स्फालित-तरलतरङ्गाया गङ्गायाः कूले शिशिरतरवारिकण-निकरसंस्पर्श-कोरकितशुभावयवानां, सुललितगमन-पदविन्यास-विलासानां, खणखणायमान-मनोहरचरण-नूपुररवाणाम्, ईषदुत्त-म्भित-सुन्दर-भ्रूमण्डल-सुभगमुखपङ्कजानां, प्रियालिङ्गनपरि-क्लेशेनेव कृशतोपगतमध्यभागानां, छन्दोरचनानामिव जघन-चपलानां, प्रावृट्कालशोभानामिव विपुलपयोधराणां, मेघावली-

नामिव स्तन-नाभि-शोभितानां[१], मोहिन्यवतारकेलिकृतीनामिव दिविज-दनुज-मनुज-मनोनयनानन्ददानां, परिधानीकृतसूक्ष्मनवांशुकानां दिव्याङ्गनानां सुललितगति-विलास-विलसित-विहरणावलोकनेन चात्मानमानन्दसन्दोहमग्राहयम्[२]। अथ पुनः कदाचित् कृष्ण इव समदनः[३], कदाचिन्मदन इव सरतिः[४], कदाचिद् दशरथ इव ससुमित्रः[५], कदाचित् कुबेर इव सपुष्पकः[६], कदाचिद् वरुण इव प्रचेताः[७], कैलाशपर्वतोपत्यकासु गौर्या सह शङ्कर इव च तत्र सुविशदस्थलीषु सपत्नीकः स्वैरं विहरन्न् नूनमनप्सरस्संवासं स्वर्गसुखनिवासमेवान्वभवम्।

## किशोरी-दर्शनम्

**27.** अथैकदा वनपवनमुपसेव्य वैनतेयमन्दिरात्[८] प्रातः प्रत्यावर्तमानोऽहं क्वचित्तरङ्गिणीतीराभ्यासे वनपवनकम्पनलुलिताङ्गीं कदलिकामिव, मृगयु-शर-शरव्यभूतां कलहंसिकामिव, तुहिनाविलामिन्दुलेखामिव, तुषारासारशिथिलां नलिनीमिव, निदाघदाहदग्धां वनवल्लरीमिव, मरुमध्यमितां[९] मरालीमिव, निजकुटुम्बनिकुरम्बभ्रष्टां कुरङ्गीमिव, पञ्जरपतितां सारिकादारिकामिव, पतिविरहितां रतिमिव, दिवश्च्युतां सुरसुन्दरीसहोदरीमिव वा काञ्चन कृशोदरीं किशोरीं मुखमालिन्येन

---

१. स्तनन+अभिशोभितानाम्, स्तन-नाभि-शोभितानामिति पदच्छेदः। २. ग्रहधातोर्णिचि लङि रूपम्। ३. प्रद्युम्नेन सहितः कामदेवेन सहितश्च ४. रत्या=कामपत्न्या सहित आनन्दोपेतश्च। ५. सुमित्रया सहितः, सुमित्रेण सहितश्च। ६. कुसुमं, पुष्पकविमानञ्च। ७. प्रचेतयतीति प्रचेताः=वरुणः। प्रकृष्टं चेतोऽस्येति भ्रमितृपक्षे। 'प्रचेताः पाशिनि मुनौ ना प्रकृष्टहृदि त्रिषु' इति कोषः। ८. गरुडचट्टीतः। ९. गताम्।

मनसो विषमां दशां प्रकटयन्तीं विलोक्य चित्रितचेता न किमपि निश्चेतुमपारयम् । परमसौ त्वरुन्तुदाधिनिपीडिताऽपि कथश्चिच्चेलाञ्चलेनाश्रूणि प्रमृज्य ससम्मानमभ्युत्थाय मां प्राणमत् । अहन्तु तां प्रष्टुकामोऽपि चेतस्यचिन्तयं यत्कथमिव सर्वथाऽपरिजातपरिचयलेशां सुवेषामेनां सम्बोधयानि ? यतः सुन्दरीत्यशालीनत्वम्, सुभगे-इत्यश्लीलत्वम्, श्रीमतीति व्यवहारबाह्यम्, आर्ये इति पत्नीसम्बोधनम्, रमणीति प्रणयप्रदर्शनम्, भामिनीति दोषारोपणम्, देवीत्यशोभनम्, वरारोहे—इति चाटुकारित्वम्, भगिनीति मनोविपरीतम्, मातरिति वयोऽननुकूलत्वम्, पुत्रीति वात्सल्यातिशायित्वम्, बाले—इति बालिशताप्रकटनम्, कुटुम्बिनीति वार्धवयस्थापनम्, किमभिधानं ते— इत्यप्रच्छनीयं परकलत्रम्, कुतः समायातासीत्यनधिकारचेष्टत्वम्, समाश्वसिहीत्यधिकारपूर्णं वचः, किमु भर्त्रा परित्यक्तासीत्यसत्कल्पनाकथनम्—इत्येवं चिरं चिन्तयत्येव मयि मर्तुकामाभिरामाऽपि सा वामाक्षी वाङ्माधुरीदूरीकृतकलकण्ठा साश्रुकण्ठा भूमिमभिवीक्षमाणाऽभाणीत् ।

## किशोरी—कष्टकथा

**28.** महात्मानः ! श्रीमतां वरीयसा वयसा, निरंहसा मनसा, सौजन्यजुषा वपुषा, कारुण्यस्पृशा दृशा च समुत्पादितो विस्रम्भो मां स्वत एवात्मनश्चेतोरुजं निवेदयितुं नोदयति । किन्तु कथमहं कथयानि मन्दभागा ? कथयित्वाप्यायासयित्र्यैव मया भविष्यते भवताम् । परमकथितमपि कष्टं परां काष्ठां प्रापयति प्राणिनं पीडायाः, कथितञ्च सह्यवेदनं भवति तत् । भगवन्तः ! अहमस्म्येकस्मिन् प्राप्तप्रतिष्ठे लब्धगरिष्ठे द्विजान्वये समुत्पन्नाऽधन्या कन्या । नाहं स्वल्पमपि जनन्याः शोभनाङ्कशयनसौभाग्यं स्मरामि । मम जन्मकाल एव प्रसवपीडया सतीलोकं गतवत्या

प्रसवित्र्यां जीवनावनीरुहसिषिक्षया पुनरागतदारभारे पितृपादे तु विमातुराधिपत्ये कथमपि युगसाहस्रीमिव वर्षाणामेकविंशति-मुल्लङ्घ्य पुण्येन पूर्वजानाम् एम. ए. पर्यन्तं मया शास्त्राध्ययनं कृतम्। साम्प्रतञ्च मध्यमे वयसि पदं निक्षिप्यमाणाऽप्यद्यत्वे कौमारमापन्ना पित्रोः कष्टकारणताङ्गता जीवामि। इदानीमिह गङ्गास्नानापदेशेनागतौ मे पितरौ विना कष्टं गीताभवनमधि-वसन्तावपि मद्धेतोर्नित्यं कलहेन कालं यापयतः।

**29.** हन्त हन्त, भारतेऽस्मत्सदृशीनां कन्यानां जन्मैव पित्रोः कष्टनिदानम्। कन्याजनिमाकर्ण्यैव हृदयं विदीर्यते, मस्तकं घूर्णते, जगदखिलं शून्यमिव प्रतीयते, चरणतलाच्च भूमिः स्खलि-तेव ज्ञायते। परं कन्यामरणन्तु पित्रोः कृतेऽनल्पस्य तपसः फलम्। गेहे मार्जार्याः, कुक्कुर्याः, कुरङ्ग्याश्छाग्याः शुक्या वा मृत्यौ हृदयमुद्विजते परं कन्यामरणे तु नेषदपि वाष्पपृषत् स्पृशति दृशं, प्रत्युत चेतो वैशद्यमनु-भवतीति पशुपक्षिभ्योऽपि परं हीनं जीवनं कन्यानाम्।

**30.** विद्वत्प्रवराः! भवन्तस्तु सारस्वतसहोदरा इदन्तु जान-न्त्येव यदस्माकं शास्त्रकारा अपि कन्याजनाय द्रुह्यन्तस्तं कृपण-कारणं[1] कथयन्ति, धनापहारकं[2] ज्ञापयन्ति, बहुदोषनिदानं निगदन्ति, हृदयविदारकञ्च समामनन्ति। अहो निर्वचनकारिणो मनीषिणोऽपि कन्याशब्दं 'क्वेयं नेतव्या भवति' इत्येवमुपहस्या-

---

१. 'सखा ह जाया, कृपणं ह दुहिता, ज्योतिर्हि पुत्रः परमे व्योमन्' (ऐतरेयब्राह्मणम्)

२. सम्भवे स्वजनदुःखकारिका, सम्प्रदानसमयेऽर्थहारिका।
यौवनेऽपि बहुदोषकारिका, दारिका हृदयहारिका पितुः॥
(सायणः)

स्य पर्यायवाचिनो दुहितृशब्दस्यापि "दुर्हिता, दूरे हिता[१], दोग्धेर्वा" इति निर्वचनं प्रकटयन्तो न लज्जन्ते। आश्चर्यं, सहृदयाः कविमहोदया अपि कन्याजनं परकीयं[२] धनं प्रदर्शयन्ति। महतामपि[३] कन्यानाम महद् दुःखं कथयन्ति, कन्या[४]-पितृत्वञ्च गृहमेधिनामधिकतरं दुःखं निर्दिशन्ति।

श्रीमन्तः! भवन्त एव भणन्तु, कन्योत्पत्तौ वराक्या जन्मग्रहीत्र्याः कन्यायाः को दोषः? अत्र तु पितरावेव प्रमाणम्। नैष स्थाणोरपराधो यदेनमन्धो न पश्यतीत्यभियुक्ता अपि कथयन्ति। मन्ये, सर्वस्यास्य वैमनस्यस्य निदानं कन्यकानां पाणिपीडनमेव। समाजे पारस्परिक-प्रतिस्पर्धाऽऽवर्त्तशतपरिपतिताः कष्टदारिद्र्या बह्वपत्या लोका मिथ्यायशोलिप्सयाऽऽत्मस्थितेरधिकं धनव्ययं चिकीर्षन्तः कन्याजनाय द्रुह्यन्ति कुप्यन्त्यसूयन्ति च। किं कदापि कथयति वराकी भारतीया तनया यन्ममोद्वाहे इयद्धनं व्ययीकरणीयं? मह्यं वा इयद्देयम्? सा तु पित्रा युवकाय निष्कलाय वा, धनिकाय निर्धनाय वा, कुलीनाय अकुलीनाय वा, विज्ञाय अज्ञाय वा, कुब्जाय खञ्जाय वा, काणाय बधिराय वा, भोगिने रोगिणे वा यस्मै कस्मैचिदपि दीयते, तमेव विवशोरीकरोति किशोरी। नैव च काकणीमात्रमपि याचति। अतः स तु यद्ददाति यच्च व्ययीकरोति तत्सर्वं समाजे आत्मानं सर्वोच्चं प्रतिष्ठापयितुमेव विदधाति। अस्यां स्थितौ कन्यकाजनस्य

---

१. "दूरे हिता=वर्त्तमाना एव पितुर्हिता भवति, समीपस्था तु सदा दुःखदा। यतः सा हि नित्यमेव पितुः सकाशादर्थं दोग्धि" इति निरुक्तभाष्यम्। २. कालिदासः शाकुन्तले। ३. सोमदेवभट्टः कथासरित्सागरे। ४. बाणभट्टः पार्वतीपरिणये नाटके।

कुतस्तावद् भाविजीवने दूराधिरोहिण्याशा, कौमार्ये एव न सुखसंवासः ।

**31.** मनस्वि-महाभागाः ! अचिरप्रसूतया जनन्या विना वर्धिताऽहमप्यस्मिन्नेव विपत्पयोदधौ पतिता रात्रिन्दिवं कलहेन पितृजनस्य, अभावेन द्रव्यजातस्य, बाहुल्येन स्वानुजौघस्य, नैष्ठुर्येण समाजस्य, मौर्ख्येण बन्धुवर्गस्य, दुःशासनेन च विमातुर्नितरामात्मनो मरणमेव श्रेयः कलयन्तीह समागतास्मीति गदित्वा स्वानि भाग्यानि निन्दन्ती पटाञ्चले मुखं निधाय रोदसी रोदयन्ती मुक्तकण्ठं प्रारोरुदीत् सा किशोरी । येन लोललोचनाभ्यां विगलन्ती नयनाम्बुविन्दुमाला मुक्तावलीव बालाया गोलगौरकपोलयुगलमलङ्कृतवती । विलोक्यैतत् समुपजातकरुणया मद्दयितयाऽभिहितम्— सत्यं सत्यं सैवेयं वराकी मन्दभागिनी मन्दाकिनी कन्या । यत्कृते ह्यस्तत्र दम्पत्योर्विपुलः कलह-कोलाहलोऽजञ्जनिष्ट । कथमपि संरक्षणीया अस्याः प्राणाः । न प्राणरक्षादपरं परं पुण्यं गदन्ति जगन्ति । प्रकृत्यैव दयाभूमयो भवन्ति युवतयो नितरां किं पुनः कृच्छ्रग्रस्तः कन्याजनः इति । एवमनवसित एव तत्कथने तदन्वेषणपरौ तत्पितरौ तत्रागतवन्तौ । यावलोक्य परमान्तर्वेदनातुन्नाऽपि सा कन्या सहसैव संवृतात्मवदनभावभङ्गतरङ्गा मनोव्यथां सङ्गोप्य विहसनं नाटयन्ती "प्रातर्भ्रमन्तीतः समायातास्मीति" वदन्ती ताभ्यां सह प्राचालीत् । ततोऽहमपि वराक्या भारतीयकन्याया विशेषतो विमातृशासिताया विवशतां शोचन् स्वाश्रममुपेत्य दैनिककार्ये व्यापृतोऽभवम् । किन्तु परेद्युः श्रुतं यत् सा प्रातः कुत्रापि गता न पुनः प्रत्यावर्तितेति ।

## पत्रोत्तरम्

**32.** एष्वेव दिवसेषु ... सुहृदः सुर

गवि हृद्येन गद्येन दलमेकं मां विलिख्य यात्राकालिकीं मदीयां दिनचर्यां स्वं समया प्रेषयितुं स्पृहां प्रकटितवन्तः। मया च त एवमसूचयिषत[१]—

अयि सहृदया महोदयाः !

भवतां शुभमुदन्तदलमुपलभ्य काममप्यमन्दां मुदमलालम्भम्। अपि प्रतिपलमविकलं कुशलं कलयन्ति भवन्तः सन्तस्तत्र स्वनिलयमधिवसन्तः सपरिवाराः ? कथमिह श्रीमन्तो मदुदन्तप्रश्ने सङ्कोचमञ्चन्ति ? अनियन्त्रणानुयोगोऽयमन्तरञ्जनः। अस्तु, यद्भवद्भिरहं पृष्टः कथं कदा केन पथा समागच्छं स्वर्गाश्रमम्, कं विनोदमनुतिष्ठामीह, केन व्यापारेण च परिणयामि दिनानीति। तदिह भवल्लेख–लिखित-वृत्तपीयूषरसपरीवाहपरिप्लावितचित्तोऽहं विलिखामि संक्षिप्य स्वकीयं यात्रावृत्तम्।

संविदर्याः[२] सुहृद्वर्याः !

**33.** यावद्–रैलप्रस्थानन्तु भवतां प्रत्यक्षमेव मदीयं वृत्तम्। ततःस्वल्पमेव लेखनीयमवशिष्टम्। दयिताद्वितीयोऽहं यदा बाष्पयानमारुह्य कौबेरीं दिशमभ्यचलंस्तदा भवदादीनां वियोगजन्या व्यथा तु पीडयन्त्येवासीत्। किन्तु यथा यथा तद्यानं पवनजवं जेतुमिव प्रबलेन वेगेन गन्तुं प्रावर्त्तत, तथा तथाऽस्मन्मनसि रत्यादिभावमाला इव वासनानिहितास्तदाश्रमसम्बन्धिन्योऽनल्पाः कल्पनाः प्रतिक्षणं जायं जायं त्वरितं तदवाप्तुं प्रेरयन्ति स्म। तत्रत्यैर्लतावितानैः शोभिता, कुसुमनिकुरम्बैः सुरभिता, नयनाभिरामैरारामैरभिनव-रमणीव रमणीयतामुपगता, हरित-

---

१. चौरादिकात् सूच्–धातोर्भावकर्मणि लुङ्। २. हे ज्ञानसङ्गरस्वामिनः ! "संवित् स्त्रियां प्रतिज्ञायामाचारे ज्ञानसङ्गरे" इति मेदिनी। 'स्यादर्यः स्वामिवैश्ययोः' इत्यमरश्च।

हरितैः शाद्वलैरुपराजिता, उच्चाकाशसमुच्छ्रृत-साल-जाल-जटिला, पचेलिमैर्धान्यैः श्यामला, छन्दोविद्येव कुसुम-विचित्रा-ऽऽहृता, वियद्वीथिकेव मेष-वृश्चिक-पतङ्ग[1]-समुपेता, नववनितेव विचित्रपत्रलकुचा[2], हृद्धारि-हरिताङ्कुर-रमणीया हरितवसना स्वर्गाश्रमीया वसुमती कदा लोचनगोचरी भविष्यतीति ध्यायं ध्यायं परमानन्दानुभूतिपरवशेन मयका मार्गे कालकला यापयित्वा सायं देहली-नगरमगम्यत। रात्रौ चातिथिशालायां विश्रम्य कौबेरीं काष्ठां मानसरस्तीरे सन्ध्योपासनमिव विधातुं प्रस्थिते सप्तर्षिमण्डले प्रस्फुरत्प्राभातिकप्रभया प्रभिद्यमानेऽथ तमःस्तोमे सिन्दूरद्रवैरिव लाक्षारसैरिव चाभिषिच्यमानायां शचीदयितककुभि[3] यमुनायां स्नातुं प्राचलम्। अभिषेकोत्तरञ्च तत्र सिकतिलपुलिने समाप्तपूजापाठः कृतप्राशराशश्चामध्याह्नं नगरेऽभ्रमम्। तत्र हि तस्मिन् दिने आसीत् कस्यचन महतो नेतुः शोभायात्रा, येन स्थले स्थले चत्वरे चत्वरे संसरणे संसरणे[4] च समुच्छ्रियन्ते स्म पताकाः, बध्यन्ते स्म तोरणानि मनोहराणि, सिच्यन्ते स्म मार्गाः, मण्डचन्ते स्म शुभालयाः, गीयन्ते स्म जयघोषाः, क्रियन्ते स्म च कोलाहलाः –इति सुरपति–पुर–पराभव-कारि–नगर-रामणीयकं विलोक्य, समुचितकार्यसम्पादनानन्तर-मस्तमन–शिखरि–शिरः-शुभोष्णीषतामुपगते तपने, उदयगिरि-सिंहासनं विहाय विहायस्तलमलङ्कुर्वति च कलानिधौ ततः प्रस्थाय द्वितीयस्मिन्नहनि पूर्वाचलाञ्चलं स्पृशति जगत्प्रबोध-प्रारम्भमङ्गले मिहिरे[5] हरिद्वारं समागच्छम्। तत्र दिनद्वयं

---

१. सूर्यः शलभश्च। २. विचित्रपत्र-लकुचा इति पदच्छेदो वसुमतीपक्षे, विचित्र-पत्रल-कुचा इति वनितापक्षे। ३. पूर्वदिशि। ४. राजमार्गे। ५. सूर्ये।

कलिकालकल्मषमुषः स्वःसोपानपरम्परा इव गाङ्गास्तरङ्गा अनुभूयात्र गङ्गाप्रवाहं समया मया स्वर्गाश्रमपरिसरे कदाचिद् गीताभवने कर्हिचिच्च परमार्थनिकेतनेऽपि ससुखं समुष्यते सम्प्रति ।

## दैनिकी चर्या

**34.** यद्यप्यत्र महत्येव प्रत्यूषे सौस्नातिकानां[१] तुमुलेन कर्णकटुकोलाहलेन निद्रा विद्राव्यते तथापि शयनवसनं परित्यक्तवतो मे मानसे विविध–निबिड–विटपि–विटप–परिकर–संश्लिष्ट-लतारूढ-विहग-निवह-कृतकलकलेन कस्याप्यपूर्वानन्दथोर्विजृम्भणं जाजायते आलस्यसमवायश्च समूलमुत्खन्यते । ततः कुश-कुसुम-दल-फल-मूल-बहुलेषु वनेषु बहुदूरं मलमूत्रोत्सर्गक्रियां समाप्य परितः पुष्पितोपवन-महीरुह-मण्डिततीरायां तुषारासार-गङ्गायां सह कुटुम्बिन्या कृतधर्माभिषेक-नैयमिकावश्यकक्रियेण मया सुरसरिदुपत्तटमेव सन्ध्योपासनपाठपूजादिकं विधीयते। तदनन्तरं समीररयविकम्पित-साल-सहकारादिपादपैः कृतातिथ्यपरम्परासु सित-पीत-हरित-रक्ताच्छच्छद-विविध-हृदयङ्गम-विहङ्गम-मनोहरासु वनवसुमतीरुहतल-समुल्लसल्लास्य-कलोदञ्चित-चारुचन्द्रकशालि-कलापि-कलापशोभितासु, विशालोत्ताल-ताल-रसाल-साल-प्रभृति-पादपजाल-शालिनीषु वनराजिषु स्वास्थ्यवर्धनोऽप्यङ्गप्रकम्पनः सुखस्पर्शनः स्पर्शनः परिसेव्यते ।

## साधोर्वर्णनम्

**35.** पथि च प्रायः प्रतिदिनमेव 'रामबाबा'भिधः कश्चना-

---

१. सुख-स्नान-प्रच्छकानाम् । सुस्नातं पृच्छन्तीति सौस्नातिकाः तेषाम् । 'पृच्छौ सुस्नातादिभ्य' इत्युपसंख्यानात् ठक् ।

न्वर्थाभिधानो महात्मा तपस्विप्रकाण्डो[१] गङ्गाकूलं निकषा कन्दरायामेकस्यां संवसन्नध्यक्षीक्रियते। अयं हि दिव्यौषधि-रस-रसायनमिव गाङ्गं पानीयं पायं पायं परिपुष्टगात्रो नैसर्गिक-सुन्दरावयवविन्यासः, सुभग-भाल-कपोल-कर्ण-नासः, शम-दम-यम-नियम-समर्जित-श्रुत-शील-सदाचारादिगुणाश्रयोऽपि शिशुरिव परिहासस्वभावः, अविरतं भगवद्-गुण-स्मरण-श्रवण-वितरण-परायणोऽपि स्मितवदनेन्दीवर-महोत्सवेन स्वं निकषा दर्शनार्थमुपस्थितानां वनितानामपि मनांसि सन्तापयन् पृष्ठतः परिलम्बमान-मसृण-कुटिल-जटिल-प्रभूतासितकचकलापेन प्रचुरेण ब्रह्मचर्यप्रभावेण च मूर्त्तिमान् प्रथमाश्रम[२] इव शोभमानो विराजते। सोऽयं नित्यमनुसवनं[३] विना पुस्तकं भगवतीं भागवतीं कथां कथयति, यदा कदा च यथेच्छं गीतामपि गायति। एनमेके शुकं कथयन्ति, अन्ये व्यासं समवगच्छन्ति, परे सूतं निर्दिशन्ति, कतिपयेऽथ लोमशं निगदन्तीत्युल्लेखालङ्कृतेरुदाहृतित्वमुपगच्छन्नयं समेषां विश्वासपात्रतां श्रद्धास्पदताञ्च बिभर्ति।

## मार्गे तपस्वि-दर्शनम्

**36.** अस्मिन्नेव समीरसेवनान्तराल-काले कतिचन भाग्यशालिनो जना यदा कदा यत्र कुत्र मत्तमतङ्गजाकारभयङ्करासु कन्दरासु कृतावासानां धर्माभिषेकक्रियाकैतवेन च विविक्ते[४] गङ्गाकूले समागतानामसिताजिन-चेलेन स्नान-सान्द्र-सुश्वेत-जटाजालेन च विराजमानानां शीतोष्ण-वात-वर्षादिष्वपि गिरिचराणामिव नागानां पूर्णमनावृतावयवानां भव्यभालेनाभि-

१. प्रशस्तः तपस्वी तपस्विप्रकाण्डः। 'प्रशंसावचनैश्च' इति समासः। अत एव तपस्विशब्दस्योपसर्जनत्वात् पूर्वनिपातः। २. ब्रह्मचर्याश्रमः। ३. प्रातः सायम्। ४. जनसञ्चाररहिते।

व्यक्तवर्चसां महीयसां तपोजुषां दर्शनेनात्मानं पावयन्ति[१]। कथयन्ति हि तद्विदो जना यदिमे मासस्य[२] द्विरिहायान्ति गङ्गास्नानाय। अहमप्येकदा वनान्तात् प्रत्यावर्त्तमानः प्रातः कुरङ्गप्लुतैः पर्वतशिखरमारोहन्तं शङ्ख-सितजटाजूट-मण्डित-मस्तकं महर्षि-वसिष्ठ-निर्विशेषं कमपि मुनिविशेषं नातिदूराद् विलोक्य प्रहर्ष-जवोद्भिद्यमान-पुलककुलको यावत् साक्षात्कर्त्तुं तदन्तिकमगच्छंस्तावन्न जाने कुत्र गतो वा तत्रैव तिरोधानमभजदित्यहमपि हस्त-भ्रष्टद्रविण इव कृपणस्तमेवानुशोचन् प्रत्यागच्छम्। अस्तु।

गौरीगुरोः पावनं पवनं परिसेव्य समागतेन मया किञ्चिद् विश्रम्य समुचितमूल्यलब्धा रस–मधुरिमाधरीकृत–सुधाधाराः शुद्धाज्यवत्यः सुरसवत्यः कुण्डलिन्योऽप्यास्वाद्यन्ते जठराग्नि-शक्तिमुद्वीक्ष्य। ततः स्वाध्यायो विधीयते। मध्याह्ने चोचितार्थ-क्रीत-चूर्ण-तण्डुल-सूप-शाकादिवस्तुसम्पादितेन व्यञ्जनादिकेनाकण्ठमुदरीदरी परिपूर्यते। तत्पश्चात् स्वल्पं विश्रम्य स्वपितिसुखञ्चानुभूय वृत्तपत्रादिकं गोचरीकृत्य पुस्तकलेखन-पत्रप्रेषणादिकानि कर्माणि नियमितरूपेणानुष्ठीयन्ते।

## गङ्गातटे सायङ्कालिकं दृश्यम्

**37.** अथ सायं पुनः समासन्नाह्निकसमयेन कृतशौचादिक्रिया-कलापेन भगवत्या भागीरथ्याः प्रभूते नहि नहि परमपूतेऽपि प्रवाहे वारिविहाराभिषेकामोदः सञ्चीयते मया। दिवसेष्वेषु

१. 'वैतानास्त्वां वह्नयः पावयन्तु' इति कालिदासप्रयोगानुसारं 'पुनन्तीत्यस्मिन्नर्थे' 'पावयन्ति' इति प्रयोगः कविसंप्रदायसिद्धः। २. मासस्यात्र अत्यन्तसंयोगाभावे 'कालाध्वनो०' इति सूत्रेण न द्वितीया, शेषे षष्ठी।

गङ्गातटीय: सायङ्कालिक: शोभनतम: समय: कस्य वाधन्यस्यापि चेतसि ब्रह्मावाप्तिसहोदरं सातिशयं शातं न जनयति ? किमन्यत्, सुखावहेन मञ्जुलतमेन समयेन प्रवर्धमानानुरागभाराप्लावितहृदय: परमौत्कण्ठ्यप्रवृत्त–प्रणयप्रवाह: प्रभाकरोऽपि प्रेयसीं समालिङ्गितुमिव त्वरितं त्वरितं पलायमानो लोलुभ्यते। एवं रजनीरमणोऽपि स्वकीयां रमणीं सभाजयितुमिव करधृत-धवल-वसन: शनै: शनै: समागच्छन् सहृदयानां मन:सु कमप्युल्लासविलासं समुत्पादयति। इह हि समयेऽस्मिन् कुत्रचिद् वारिविहारदोहदेन समायाता विभिन्नप्रान्त-सीमन्तिन्य: कामोष्माणं सान्त्वयितुमिव जलविहरणपरायणा विलोक्यन्ते। कुहचिच्च स्नानक्रियानुकूले गङ्गाकूले समुत्तारितवसना अपि शीतलजलावगाहनभीता: प्रवाहं[1] नाभिनिविशमाना: केवलं चरणोत्पलाभ्यां पानीयं समुत्स्फालयन्त्यो गजकुम्भ-तुङ्ग-स्तनभारदूरविनिवारितोदरा[2] यौवन–मदमत्त–कान्त–कुन्तल–कमनीया: सहासभाव-विलास-विलसितावयव-रमणीया हठाच्चक्षूंषि समाकर्षन्ति तटमुपागतानां जरठानामपि किम्पुनर्यूनाम्। कतिचन च कमलवदना मदनसदना: सुललितललना जलमवगाह्य गङ्गाम्भसामुत्पलक्षतिं क्षपयन्त्य इव तरन्त्य: सुमनसामपि मनो मोहयन्ति। कुत्रचन जलकेलिमुत्सृज्य कूलमुपाश्रितानां तरुणीनां स्रवज्जलशिरोबाला: श्रोणिसङ्ग-सौख्य-सौविध्य-वियोगेनेव पुनरपि च भाविनीं बन्धनभीतिं स्मारं स्मारं रुदन्त इव प्रतीयन्ते।

---

१. अभिनिविशमाना:—इत्यस्य योगे प्रवाहशब्दस्याधारस्य 'अभिनिविशश्च' इत्यनेन कर्मत्वम्। २. गजकुम्भा: इव ये तुङ्गा: स्तना:, तद्भारै: दूरे विनिवारितानि—अतिकार्श्याद् अस्फुटतया दूरे स्थापितानि उदराणि यासां ता:।

कस्मिंश्चिच्च सुरस्रोतोवहा-तटवर्त्तिनि मुक्ता-चूर्ण-कण-निकरेणेव सिकता-सित-कण-विच्छुरिते[१] विविक्त प्रदेशेऽतिसङ्कुचित-जघन-परिधान-पिनद्ध-नितम्ब-मण्डलाभोगतयोपवेष्टुमशक्नुवत्य इवेतस्ततो भ्रमन्त्यः काम-कोदण्डायित-भ्रूमण्डल-सुभग-मुख-पङ्कज-श्रिया श्रियमुपहसन्त्यश्च मेदिनीमण्डलमणयो रमण्यो रमणैः सह गीर्वाणनगरनिवासिनीस्तिरस्कुर्वत्यश्चेतांसि चोचुरति[२]। अथापरत्रामरसरित्तटे परिधृतपीताम्बराः परित्यक्त-समाडम्बराः करगृहीतारकूट-करका[३] धरामराः[४] सायं सन्ध्यामुपासितुं शैवलिनीनीरं प्रविष्टा देवदीर्घिका-सलिलावतीर्णान् महर्षिप्रवराननुहरन्ति । सायं समये स्वतः समुद्भूत-प्रभूत-प्रभावभारेण गन्धवह-प्रवाहेण जह्नुकन्यायां साम्रेडमुत्पद्यमाना विलीयमानाश्च विमला वीचिमाला अपि दरिद्राणां वाञ्छा इव प्रतीयन्ते ।

38. एवं सायङ्कालिकं नन्दनोद्यानमिव स्रवदमरसरिदानन्द-सन्दोहं चायं[५] चायं लोकं लोकञ्च[६] लोकातिगं तत्रत्यं दृश्यं विचित्रमदभ्रं रसास्वादं सेवमानो निकेतनं प्रत्यावृत्य सायमशनञ्च[७] विधाय सार्धनववादनं यावत् तत्राभिमुखं भगवतः प्रार्थनायां सम्मिल्य दशवादनात् पूर्वमेव परमप्रसादपूरिते प्रासाद-पृष्ठे सुखस्वापं कुर्वन्नपि स्वप्ने तान्येव बुद्धिसात्कृतानि दैनिकानि दृश्यानि साक्षादिवानुभवन् रात्रिन्दिवं तामेवामन्दां मुदं लालभ्ये[८] ।

---

१. विच्छुरिते=व्याप्ते । २. चुरधातोर्यङ्लुकि लटि रूपम् । ३. पित्तल इति नाम्ना प्रसिद्धेन धातुना निर्मितं कमण्डलुनामकं पात्रं हस्ते गृहीत्वा । ४. ब्राह्मणाः । ५. विचित्य विचित्य । ६. दृष्ट्वा दृष्ट्वा । ७. सायङ्कालिकं भोजनम् । ८. लभधातोर्यङि लटि रूपम् ।

## मेघवृष्टिः

39. अत्रैकदा प्रचण्डतायाः शिखरिशिखरं समारूढे निदाघराजे तत्प्रतापमसहमान इव सहसाऽपराह्णे तिरस्कृतरवित्विषः संवर्धित-मण्डूक-मण्डलहृषः, परिहृत-चातककुलतृषः प्रावृषः समयः समायात इव सञ्जातः। झटिति गिरि-गह्वर-तरु-कानन-विकम्पनः प्रभञ्जनश्चलितुं समारब्धः। अथ क्षणेनैव घोरान्धकारं विस्तारयन्त्यः परितः पर्वतमाला इव सान्द्रनीला मेघमाला वियति समजञ्जन्यन्त। ताश्च बहोः कालाद् वियुक्ताः सख्य इव परस्परं प्रेम्णा सम्मिल्य प्रेमाश्रुप्रवाहेणेव पूगस्थूलजलबिन्दुसन्दोहेन भूरि भूमिमभ्यषिञ्चन्। वारिदाश्च मिलितिमहोत्सवमभिनन्दन्त इव वियता[१] वियता[२] नभस्वता[३] ऽपरिमाणं पटहध्वानं वितन्वन्तो व्यराजन्त। सौवर्णवर्ण-वर्णनीय-कान्ति-रमणीयाश्चञ्चलाश्चपलामालाश्चापि[४] चापल्येन प्रेर्यमाणा नृत्यन्त्य इव क्षणे क्षणे प्रकाशं विस्तारयन्त्यः किमप्यपूर्वं शर्म समयच्छन्। एवं स्वल्पेनैवानेहसा[५] सर्वतः कापि प्राकृतिकी वार्षिकी विच्छित्तिरत्र समवालोलुक्यत[६] सर्वैः, नैदाघः प्रसारोऽपि तत्कालमेव चौर इव कुत्रापि व्यलीयत। सायं कुमुदिनीनाथोऽपि पीयूषपूरमिव सिञ्चन् दिवि समुदैत्।

## नीलकण्ठ-दर्शनम्

40. अथान्येद्युः प्रभाते हरिकरै[७]रभितस्तिमिरकरिकुललोपं विलोक्य मनसि निज-शश-विशमनभयेनेव पालयमाने कुमुद-

---

१. आकाशमार्गेण। २. इतस्ततो गच्छता, विशेषेण एतीति वियन् तेन वियता। वि—इण (गतौ) धातोर्लटः शत्रादेशः। ३. पवनेन। ४. विद्युन्मालाः। ५. समयेन। ६. दृष्टिपथमायाता। ७. सिंहहस्तैः, सूर्यकिरणैश्च।

बान्धवेऽत्रत्याः कतिचन यात्रिणो जनाः सस्त्रीका हर्षावर्षकं लोचनरोचकं कालमाकलय्य भगवतो नीलकण्ठस्य दर्शनार्थमुदचलन् । अहमपि पत्नीद्वितीयो विहितनिश्चयो विविध-नव-नवरुहामोद-मुदित-वदनायाः काननश्रियः सन्दर्शन-कुतूहलाकृष्टहृदयस्तानन्वगच्छम् । अनालोकितपूर्वमासीत्तद्धि मे नीलकण्ठमन्दिरम् । तत् तु निकेतनादस्मादुपर्युपरि पर्वतं[१] गव्यूतित्रयमवर्त्तत, परं गव्यूतिद्वयन्तु परमो विषमो मार्ग आसीत् । नावर्त्तत कुत्रापि सरलः पन्थाः । प्रायः सर्वत्रैवाविद्यत समुद्घातिनी मेदिनी । भाग्यात् तदैव प्रभञ्जनोऽपि यात्रिजनान् तोत्तुमिव[२] स्वसैन्येन साकं तत्रोपस्थाय सर्वानप्यस्मान् रजस्वलाक्षानचरीकरीत्[३] । तेन हि पदे पदे प्रास्खलन् चिक्कणेषु पाषाणखण्डेषु नः पादप्रक्षेपाः । क्षणे क्षणे चाध्वन्यमुष्मिन् नैकविध-फल-प्रसून-स्तवक-किसलय-शोभाभार-नम्यमान-लतावलयेन कशाघातेनेव सम्मुखं हन्यमाना वयं नैकपदमपि पुरो गन्तुं सहसा सक्षमा अभूम । मम पत्न्यास्तु विचित्रैव दशा समजायत । सा पूर्वमेव निर्बला रुग्णा चासीत् । साम्प्रतञ्च पर्वतारोहणश्रान्ता क्लान्ता कथमपि पदात् पदमपि गन्तुमशक्नुवती पुरोयायिभ्यो जनेभ्यः[४] शपते स्म । अतस्तत्रैव मध्येमार्गं स्वल्पं विश्रम्य पुनरपि समूर्जितोत्साहेन नवीनीकृता इव वयमग्रे चलन्तो वनान्ताद् वनान्तम्, गिरिशृङ्गाद् गिरिशृङ्गम्, अधित्यकातोऽधित्यकाम्, तरुलतागुल्मवृन्दात् तरुलतागुल्मवृन्दं समुल्लङ्घ्य परितः परिराज-

---

१. 'उभसर्वतसोः' इति वार्तिकेन पर्वतमित्यत्र द्वितीया । २. व्यथयितुम् । तुद्व्यथने-इति धातोस्तुमुन् । ३. कृ धातोर्यङ्लुकि लङि रूपम् । ४. अत्र 'शपते स्म' इत्यस्य प्रयोगे 'श्लाघ-ह्नुङ्-स्था-शपां ज्ञीप्स्यमानः' इति सूत्रेण ज्ञीप्स्यमानस्य जनशब्दस्य सम्प्रदानसंज्ञा ।

मानानां कोटिकीर-निकरातिशायि-हारित्यानां समिथुनानेक-विहगवृन्द-विहित-निकेतनानाम्, अन्यत्र चाहाराकुल-शावककुल-कृत-विविधस्वन-मुखरितानां साल-ताल-रसाल-तमालादि-तरु-राजानां नाकादप्यधिकानन्ददायि-शोभा-समूहानां रामणीयकं दर्शं दर्शं धन्यंमन्यमाना आत्मानं मध्याकाशमुपगतवति भगवति विवस्वति सर्वे वयं नीलकण्ठशिखरमगमाम ।

## नीलकण्ठगिरौ निर्झरः

41. तत्र गत्वा तु गेहे प्रमुदितानुरक्त-पुत्र-पौत्र-कलत्र-परिवारा गृहपतय इव वयं सर्वं एव कमप्यद्भुतं सुखसमवायलालभ्म[1] । तत्रारान्मन्दिरान्मण्डूककुल-कलित-हृदयस्तटमुभयतश्च तरुषु शुक-शावक-कुल-कृत-कलकलारावः सून-शोभा-भार-नत-लता-बाहुभिर्वनराजिभिर्विहितनमस्कार एकः स्वच्छ-जलधरो नातिविशेषाकारो निर्झर आसीत् । यद्वारि-माधुर्यं सुधासौन्दर्यमपि न्यक्कुर्वत् स्ववसिनामपि हृदयेषु तत्पानस्पृहां तन्तनीति स्म । निःसन्देहं सोऽयं निर्झरः प्रकृतिदेव्याः स्वच्छ-मुकुर इव, गिरिपतितः कश्चन गगनतलांशावतार इव, प्रवहन् पारद-प्रवाह इव, कैलाशवासिनः शङ्करस्य विशदाट्टहास इव, जलरूपेण परिणतः कर्पूरपर्वत इव विराजमानः सर्वेषामस्माकं लोचनमहोत्सवोऽबोभवीत् । अत्रैव वयं राजीवराजमानवारिभिः करचरणवदनानि प्रक्षाल्य भगवन्तं, नीलकण्ठञ्च जलेनाभिषिच्य साकमानीतेन कौष्माण्ड[2]-भोज्यवस्तुनोदरदेवमप्यभ्यर्च्य किञ्चिद् विश्रम्याथ भूयोऽपि पीयूषकल्पं स्वादूदकं कामं निपीय ततः प्रचलिताः । भगवान् मरुत्वानपि करुणयेव मन्दानिलेन सार्धं

---

[1] लभ्धातोर्यङ्लुकि लङि रूपम् । [2] 'पेठा' (कूष्माण्ड-संपादित आगरे का पेठा ।)

तत्र वारिदान् छत्र-वितानानिव[1] वियत्यतानीत् । अतः प्रत्यावर्त्तने त्वनेहसि नेषदपि कष्टपृषदस्पृशन्नः । प्रत्युत गिरिसानून्यध्यासीना वारिवाहा मन्दानिलेन प्रसरन्तः सन्तः पर्वताधिराजस्य पताका-प्रसारा इव शोभमाना अस्माकं मनांस्यचोचुरः। गिरिशिखरादस्तमनेऽनेहसि सहस्ररश्मेर्दृश्यमपि कामपि कमनीयतामभजत । मन्ये, पुञ्जीभूतानां मयूखानां भारातिरेकेण स्वात्मानं विनाऽऽधारं वियति धारणेऽक्षमो रविविम्बो जलनिधौ निपतन् समेषां दयाभाजनतां लभमान इवाशोभत । निकेतनं समागच्छति त्वस्मन्मण्डले यावद् भास्वानस्तमगच्छत् पश्चिमाकाशे च स्वल्पविभा-भासितास्तारकाः स्वर्णाचलशिखर-संस्थितमार्त्तण्ड-रथस्यायश्चक्रस्य सङ्घर्षण-समुत्थिता वह्निविस्फुलिङ्गा इव व्यराजन्त तावद् वयमपि स्वालयमुपेत्य सर्वं सायङ्कालिकं साह्निकं भोजनादिकं कृत्यजातं सम्पाद्य गगनसुन्दरी-वदनारविन्द-चन्दनबिन्दोरिवेन्दोर्मनोमोदिन्यां कौमुद्यां निद्रादेव्या विशदेऽङ्के शयितुमगच्छाम ।

42. एवमहमत्र वहुविध-वृजिन–परिताप–तप्यमानमात्मानमनुपलमानन्दविनोदेन समं गाङ्गेन पानीयेन शीतलयन् स्नापयश्च सद्यः परनिर्वृतिं लभे । एवमिह सह सहधर्मिण्या गीताभवनमधिवसतो[2] मे त्रिगुणानि पञ्च दिनान्यवसितानि । अव्यभिचारिणीयं मे लिखितिर्यदत्र स्वर्गाश्रमं[3] समया समयेऽस्मिन् मया स्वर्गसुखमेवानुभूयतेऽनुदिनम् । परन्त्विदन्त्वनुभवाम्येव—

---

१. 'वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम्" इति मेदिनी ।
२. अत्र 'उपान्वध्याङ् वसः' इति सूत्रेण अधिवसतेः आधारस्य गीताभवनस्य कर्मत्वात् द्वितीया । ३. 'अत्र 'अभितः परितः०" इति वार्तिकेन द्वितीया ।

वरीवृषति वारिदा: क्रमुक[1]कल्पविन्दुव्रजै-
विबोभुवति गर्जना मधुरमन्द्र-सान्द्रस्वना: ।
सरीसृजति यद्यपि प्रकृतिरप्यमन्दां मुदं
तथापि भवतो विना प्रियवरा ! न शान्ते: कण: ॥

शेषं सर्वविधं कुशलमविकलं वर्त्तते, भवताऽथ वृत्यताम्, आयुष्मन्तो बालाश्चाशीर्भिरभिनन्द्यन्ताम् । किमन्यदिदमप्यस्तु-

युष्माकं भ्रातृपादेषु मुनिकल्पमहात्मसु ।
अस्माकं नतय: सन्तु युष्माभिर्विनिवेदिता: ॥

इहाधिकादधिकं दिनद्वयं यावत् तिष्ठासामि[2] । यतो मिमेलिषति[3] मे मन: प्रतिदिनं भवता । अतो गङ्गोत्तरीय-यात्रां सम्पाद्य प्रत्यावर्त्तनेऽनेहसि च दिनद्वयं हरिद्वारे स्थित्वा शीघ्रमेव तत्र पुनर्भवदादीन् द्रक्ष्यामीति सूचयति—

यौष्माकीणोऽयं सुहृत्

## पत्नीकृत: पदयात्रानुरोध:

43. एवं तत्र सानन्दमतिक्रामत्सु केषुचिद् दिवसेषु जरठता-मुपगतेषु च सर्वामय-सन्तानेषु[4] भूयो गङ्गोत्तरीय-जिगमिषा हृदयनिवेशे समवेविश्यत[5] । येन तत्राजायन्त न्यक्कृतनक्षत्र-चक्रमहसि विगलज्जलविप्रुषि प्रावृषि प्राय: सान्तराया: पन्थान: । एवंविधे च दिष्टे[6] चरणचारिणो यात्रिणो नितान्त-न्तोदमनुभवन्तीत्येवं जानानाऽप्यप्रभवन्ती मनोभव-भावावरो-धने[7] केनचिदपि हृदये प्रेर्यमाणेव पृष्ठतो नोद्यमानेव पुरतश्चोप-कृष्यमाणेव निरस्य नारीसमयं समुपेक्ष्य शारीरिकीं स्थिति-

---

१. पूगफलम् । २. स्थातुमिच्छामि । ३. मिल् धातो: सन्नन्ताल्लटि । ४. सर्वरोगसमूहेषु । ५. विश् धातोर्यङि लङि । ६. समये । ७. मन:समुद्भूतविचाराणां संवरणे ।

मभिनव–ससुत्साह–सलिल–क्षालितलज्जा मज्जाया पद्भ्यामेव तत्र गमनाय[1] स्पृहयन्ती सानुरोधमेवं निगदितवती– स्वामिन्! पूर्वमपि बदरीनाथ–यात्रावसरेऽस्माभिर्भूयांसो दन्द्रमणा[2] मार्गाः पद्भ्यामेव गमनविषयीकृताः। बहुकुतूहलाकलितः खलु श्रवणातिथीभूतो गङ्गोत्तरीय–पदातिमार्गः। चरणसञ्चरणे कीदृश आनन्दः, कीदृशं स्वाच्छन्द्यं, कीदृशी च प्रतिदिनं नवनव-स्थानावलोकितिः? नित्यं स्वेच्छया चलितिः, स्वेच्छया संस्थितिः, स्वेच्छया भक्षितिः, स्वेच्छया पीतिः,स्वेच्छया शयितिः, स्वेच्छया जागरितिश्च। नैवं स्वल्पोऽपि पारतन्त्र्यलेशः। क्व सा मरुत्तरयानेन मनःप्रसादोपलब्धिर्या हि पद्भ्यामधिगंस्यते। गतदिवस एव परमार्थनिकेतनतश्चत्वारो महात्मानो गतास्तत्र पद्भ्यामेव। अतो यदि मदीयं निवेदनमनुरोरुध्यन्ते भवन्तः, सम्भावनीयां वा मम्मन्यन्ते दयितां सदयहृदयवन्तः श्रीमन्तस्तर्हि नोपेक्षणीया ममेयमभ्यर्थना, न तोदनीया मदीया मनःस्थली, न तननीया कापि चिन्तासन्ततिः, नैवानयनीया च हृदि भीतिसंहतिः श्रीमद्भिः। सौम्येन मनसा निवेदयामि, प्रणतेन शिरसा प्रसादयामि, पौनःपुन्येन पादौ संवाहयामि। न पूर्वं मन्मनोविरुद्धमाचरणं स्मरामि श्रीमताम्। न वा प्रत्याख्यानीया[3] जाताऽहं भवतां दयिता। वर्षाभिर्यत्र कुत्र विकृतेऽपि मार्गेऽपूर्वानन्दलब्धयेऽस्माभिः पद्भ्यामेवावश्यं गन्तव्यम्। यतो घनाम्बुभिः पिच्छिलेऽपि[4] राजपथे क्वचिद् बुधा अपथेनापि[5]

---

१. अत्र 'स्पृहेरीप्सितः" इत्यनेन चतुर्थी। २. कुटिलं द्रमन्तीति दन्द्रमणाः। गत्यर्थक–द्रमधातोः यङन्ताद् युचि अल्लोपे यलोपः। ३. तिरस्कर्तुं योग्या। ४. पङ्किले। पिच्छादित्वात् इलच् ५. अपथेनेत्यत्र 'पथो विभाषा' इति समासान्तोऽकारः।

गच्छन्त्येवेति भवन्त एव प्रमाणम्। प्रियतमप्रसादो हि दयितानामुत्सव–सीमा। अतो नामं नामं नाथ! नाथाम्यनाथेव[१], न मे नाथनं[२] कदर्थनीयम्। अत्यन्तं समुत्सुकास्मि, भृशं भक्तास्मि, निरत्ययमनुरक्तास्मि, प्रसीदन्तु भवन्तः, प्रदर्शयन्तु पत्नी-प्रणयम्, पूरयन्तु मनोऽभिलाषम्, प्रकटयन्तु निरत्ययां दयामिति साम्रेडं सानुरोधञ्च शतधाऽतिमधुरया गिरा निवेदनमस्या मनसि कृत्वा मया हृदि चिन्तितम्!

## पत्न्या अनुरोधेन मनसि चिन्ताविर्भावः

**44.** हन्त स्त्रीणामादरोऽपि तिरस्कारायैव, सत्कारोऽपि न्यक्कारायैव, परिस्तवोऽपि परिभवायैव, मधुरालापोऽपि प्रलापायैव, प्रेमभाषणमपि संभषणसदृशमेव च। सम्प्रति कथमेषाऽनुशासनीया, कथमस्या अभीष्टार्थ–स्थिर–निश्चयं चेतः परिवर्त्तनीयम्। पश्चात्योस्तत्र गमनन्तु कथं शक्यम्? परं बलवान् खल्वस्या अभिनिवेशः। किमत्र सहसोपक्षिप्तमिदं दैवेन? सत्यं हि प्रभवति प्रभुः सर्वत्र। अपूर्वः खलु नियतेः पन्थाः। सर्वथा निष्ठुराणि भवन्ति दुर्दिष्टचेष्टितानि। कीदृशोऽयं सङ्कटसमारोहः शिरसि समायातः? इतः कूपः, ततः खेय[३]–वलयः, इतः सिंहः, ततः ऋक्षः, इतो दावानलः, ततो दस्युयूथः प्रबलः, एकतः स्वदयिताराधनं परतो यात्रासम्पादनम्। किं प्रतिनिवर्त्तनमेव श्लाघ्यम्? उत अत्रैवावकाश-समयसमापनं शोभनमिति द्विविधदोलान्दोलितो व्याकुलीभूतो मुहुर्मुहुः शोचं शोचं मनसि किमपि निश्चित्य पुनः कथमप्युपांशु गृहीत-दीर्घनिःश्वासः प्रकाश-

---

१. नाथामीत्यत्र "आशिषि नाथ इति वाच्यम्" इति वार्तिकेन आशिष्येवार्थे आत्मनेपदविधानादन्यार्थे "शेषात् कर्त्तरि परस्मैपदम्" इति परस्मैपदम्। २. याचनम्। ३, परिखावलयः।

श्च प्रकटित-सुहासः परिहासपल्लविताभिर्दरस्मित–समन्चि-ताभिः पीयूषपूरिताभिरिव वाग्भिः किमपि चाटूक्ति–कुटिलाभिः किमपि नर्मोक्तिसम्भृताभिः किमपि कथयन् कथमपि प्रसाद-प्रदानोन्मुखीं दोषाकरमुखीं[१] तां विधाय भूयः साहसञ्च विचित्य संसिस्मयिषमाणेन[२] मया कथनमारब्धम् ।

## पत्न्यवबोधनम्

45. भद्रे ! हंहो उदारास्ते विचाराः, अवञ्चनन्ते वचन-प्रपञ्चनम्, सवीर्यन्ते गाम्भीर्यम्, अव्रात्यन्ते[३] पातिव्रत्यम्, नय-निर्विशेषा[४]स्ते सदुपदेशाः, किङ्कथनीयन्तव? परन्तु कान्ते! विना विचारङ्किमिदमुपन्यस्तं सहसा साम्प्रतं तत्रभवत्या श्रीमत्या ? कोऽयमभिनवस्ते प्रणयानुरोधः ? केयं विचित्रा यात्रापद्धतिः ? केनेदन्तवोपदिष्टम् ? प्रमदाप्रमादातिशयताभृता तवोपनिषदेषा, अज्ञानस्खलतिरेवैषा, दुराग्रहातिरेकश्चैषः, मुखरता अवसरे हि शोभते, क्वेदं तव निर्गलिततारुण्यं वयः ? क्व च गिरिशिख-राद्यारोहण–गर्त–समुल्लङ्घनादि-दुष्कर-कर्मणाञ्चयः ? क्व वाय-न्तव विविधामयमयः कायः ? क्व चायं प्रतिपदं विपदां सम-वायः ? साम्प्रतं सुतरां दुर्बलासि, अतितरां क्षीणक्षीणासि, नितरां नलिनीदलपेलवासि, गोस्तनीव[५] शुष्कशरीरासि, बाले-न्दुकलेव तन्वङ्ग्यसि, प्राभातिकी यामिनीव क्षीणतारकासि, सत्यं हि मार्गखेदाक्षमौ कोमलकमलदलानुहारिणौ तव चरणौ। स्त्रीजन–सहजमिदं त्वच्चापल्यम् । अस्मिन्ननेहसि कनीयसि

---

१. चन्द्रमुखीम् । २. परिहसितुमिच्छुना । स्मिङ् (ईषद्धासे) धातोःसन्नन्ताल् लटः शानच् । 'सन्यङोः' इति द्वित्वम् । 'पूर्ववत्सन' इत्या-त्मनेपदम् 'स्मि पूङ् रञ्ज्व०' इति सन इट् । ३. संस्कारसंस्कृतम् । ४. नीतितुल्याः । ५. द्राक्षा ।

विशेषेण प्रावृषि पद्भ्यामेव तत्र यानं साम्प्रतमसाम्प्रतमेव मन्ये। तन्वि! निश्चयेन पदात्योरावयोस्तत्र गमनं बाहुभ्यामब्धेस्तरणं, हृदयेन दावानलालिङ्गनं, शशकशावकेन तपन-स्पर्शनं जाज्ञायस्व[1]। साधुमहात्मजनोचित एव स पन्थाः, परित्याज्यश्चायं दुरभिनिवेशः। भूयो भूयो वदामि वामाक्षि[2]! मात्रात्मनो[3] माक्षिक[4]मप्याक्षिपद्[5] वचो गरलायितं विधेहि, मा यात्रानन्दसन्दोहं क्रन्दने परिवर्त्तय। अतो यावन्मरुत्तरयानप्रयाणं तावत् तेनैव यानं श्रेयस्करं भविकाभिनिवेशिनोरावयोरिति।

## पत्नीकृतोऽनुतापः

**46.** श्रुत्वैतत् प्रतिपन्न-मौनभावा विमलीभूत-प्रभावा, प्राप्ताङ्ग-वैवर्ण्या, समुच्छ्वसितवदनारविन्दा, अवगलत्स्वेदसलिला, आकस्मिक-विस्मय-विस्मृत-वाग्विलासा, अतनु-तुहिनाहता नवनलिनीव, भयभूमिभ्रान्ता हरिणीव, मनाग् वलितकन्धरा अधोनयना गलमालामणिगणनपरा पादाङ्गुष्ठेन मृदमुत्किरन्ती शिरःकण्डूयनेन त्रपां संवृण्वती निरवधिकन्यक्कारमनुभवन्ती मनसेव मूकीक्रियमाणा, कृतापराधेनेव समवहेल्यमाना, बाष्पैरिव कण्ठे रोरुध्यमाना, समुपजात-समुचित-चारुविचारा, भ्रूकोण-सञ्ज्ञापित-स्वीकृति-प्रसारा, प्रकटित-क्रीडा-विलास-सम्भारा च सा कृते कर्मणि महान्तमनुतापं मनसि मन्यमानेव, विहितापराध-परिमार्जनाय चेतसि क्षमामर्थयमानेव लज्जया भूमि बिलं

---

१. ज्ञाधातोः यङि लोटि म० पुरुषैकवचनम्। २. हे सुलोचने! विपरीतवाक्यकथनात् वक्रलोचने वा। ३. मा+अत्र+आत्मनः इति पदच्छेदः। ४. मधु। ५. तिरस्कुर्वत्। अर्थात् अतिमधुरं स्वकीयं वचः न ईदृशैः कथनैः विषसदृशं कुरु।

याचमानेव केनाप्यन्तर्भूतेन मनोभावेन विस्मापितेव, समाकुलितेव, परिगृहीतेव, भीतभीतेव च विनयवारिभिः पापानि प्रक्षालयन्तीव, चेलाञ्चलेन वदनं वीजयन्तीव, दीर्घमुष्णञ्च निःश्वस्य सगद्‌गदं कथमपि निगदितवती—

## पत्नीकृतं क्षमायाचनम्

**47.** नाथ! वाग्-विहित-दुरितदूरीकरणाय रचितोऽयमञ्जलिः। जातापराधाया अपि स्वप्रिय-जायाया मर्षयितव्योऽयं तीर्थस्थले प्रमादकृतः खलु प्रथमोऽपराधः। प्रह्वेषु[1] निर्बन्धरुषो हि सन्तो भवन्ति। किं न मर्षयन्ति सुमनो-मनांसि मधुकर-चरणपतनानि ? किं न सहते द्विजराजो[2] वक्षसि मृगपदपातम् ? न हि महोरग–विसर्पि–विक्रमो विक्रमते राजिलेषु[3] विनतासुतः। दयितानां दोषजातमवधीर्य धारयन्ति बुधा धवा मानसे गुणमेव। अतो न किमप्यन्यथा नाथ ! हृदि करणीयम्। न वा किञ्चिदचिन्त्यं चिन्तनीयं चित्ते। वस्तुतो नैव लोष्टधिया मया किमपि पूर्वं सर्वमेतच्चिन्तितम्। निष्प्रपञ्चं हि सर्वथाऽज्ञानविजृम्भितं भवति स्त्रीणां विचेष्टितम्। मरुत्तरयानेनैवास्माभिर्यात्रा करणीयेत्यसकृत् कृतक्षमाप्रार्थनां विहितानेकप्रणामां तामहमवादिषम्—पतिजीविते ! किमनुतपसि ? स्वातन्त्र्यसाम्राज्येऽस्मिन् सर्वो हि जनः सर्वमपि कथयितुं स्वतन्त्रः, विशेषेण स्त्रीजनः। साम्प्रतं तु महिला-साम्राज्यमेवास्ति। तथापि त्वयि तु न हि स्वल्पोऽपि किल्विषलवः सम्भाव्यते। भवन्त्यनुपलमनुकूला भर्तृकार्ये कुलाङ्गनाः। अतः सर्वथा अलमलमत्यनुतापेन प्रयासेन। कृतमतिपापसंलापेन। विश्वस्ता भव, विमुच्यतामिदमतियाचनन्त्वये-

---

१. नम्रेषु। २. चन्द्रमाः। ३. डिमुखेषु सर्पेषु।

त्येवं सूक्ति-सुधा-सेककोमलाभिर्नर्मोक्तिभिस्तां प्रकृतिस्थामापा-द्यागामिन्येव दिने तत्र प्रस्थातुं निश्चयमकरवम् ।

## मरुत्तरयान–प्रबन्धः

**48.** अथ गृहीत-सुख-निःश्वासः पानकरसपानेन दूरीकृतहृद-याऽऽयासस्तया सह नौकया हृषीकेशं गत्वा तत्र सत्यापन[१]-पूर्वकं मरुत्तर-स्थान-व्यवस्थां विधाय प्रत्यागत्याथ स्वर्गाश्रमे रविरथ-तुरग-खुराघातास्ताचल-समुद्धूत-गैरिकरजःपटलकल्पे समुल्लसिते सान्ध्यरागे समुदिते च यामिनी[२]-भामिनी-नायके भोजनादितो निवृत्य सङ्गृहीत्य च सर्वं सम्भारं गङ्गोत्तरीयस्थलीगमनो-त्कलिकया[३] वर्षशतायमानां त्रियामामावां न्यसीसराव । पक्षि-भ्योऽपि प्राक् प्रातस्तरां[४] दरिद्राणप्राणे[५] तमीदयिते[६] समुत्था-याहं सम्पादित-प्राभातिकक्रियः प्रमत्त-पाश्चात्त्य-युवति-कपोला-रुणे किरण-निकराभरणे भगवत्यरुणे समुदिते भगवन्मन्दिर-मुपेत्य सानन्दथुर्भगवन्तं नामं नाममेवमस्तवम्—

## भगवत्स्तुतिः

**49.** गोविन्द ! मन्निवेदनं हृदयेऽवधार्यताम्,
विनाऽन्तरायमार्य ! मे यात्रा वितन्यताम् ।
याऽऽपत् पतेत् पथि प्रभो ! कुत्रापि काऽप्यहो,
सा दीन-बान्धवाधुना त्वरितं निवार्यताम् ॥
उच्छिद्यतेऽत्र सर्वशः शुभकर्म-संस्कृतिः ।
एतां सुरक्षितुं कला स्वीयाऽवतार्यताम् ॥

---

१. सत्याकृतिः । 'साईं' इति भाषायाम् । २. निशानाथे चन्द्रे ।
३. उत्कण्ठया । ४. अतिशयेन प्रातः प्रातस्तराम् । तरप्, आम् च ।
५. दरिद्राणाः=क्षीणाः प्राणाः यस्य एवंभूते । ६. निशानाथे चन्द्रे ।

गीतासु पार्थसम्मुखं यद्वाक्यमादृतम्,
अयि सत्यसन्ध ! तत्स्मृतिर्हृदये विचार्यताम् ॥
स्वसंस्कृतेः परां रुजं पूर्णं प्रपश्यता,
धन्वन्तरेस्त्वयाऽऽकृतिर्भूयोऽपि धार्यताम् ॥
हन्तुर्विलोक्य धेनुकां[1] या धेनु-दुर्दशा,
जाजायते तथा स्थितिस्त्वस्या निरीक्ष्यताम् ॥
या ग्राहपीडिते गजे या गोप-पालने,
विधृता दयाऽधुना प्रभो! सैव प्रसार्यताम् ॥
द्रुह्यन्ति धर्मकर्मणे ये दुष्टशत्रवः,
सोऽयं द्विषद्गणो विभो ! सपदि प्रमार्यताम् ॥
सन्तोऽपि हन्त नित्यशः कलहं वितन्वते,
अज्ञानमान्तरं सतां दूरेऽपसार्यताम् ॥
एकीकृता यथाम्बुधेर्मथनेऽसुराः सुराः,
अस्मास्वपि प्रभो ! तथैवैक्यं प्रचार्यताम् ॥
धर्मं विहन्तुमुद्यता ये सन्ति शात्रवाः[2],
तेषां वधाय भो विभो! चक्रं प्रचाल्यताम् ।
हा किं प्रपश्यता त्वया समयः समाप्यते,
अभ्यर्थना हि काङ्करी झटिति प्रपूर्यताम् ॥
गोविन्द ! मन्निवेदनं हृदयेऽवधार्यताम्,
विनान्तरायमार्य ! मे यात्रा वितन्यताम् ॥

## उत्तरकाशीं प्रति प्रस्थानम्

**50.** एवं चिरं चित्तेनान्तरेण भूयो भूयः संस्तूय भगवन्तं गोविन्दं, समाचामीकृतचरणामृतः प्राप्त–प्रसाद–सुमनोमालः,

१. छुरिकां । २. शत्रवः । शातयतीति शात्रवः । 'रुशातिभ्यां क्रुन्' (उ० ४।१०४) ।

पूजकैश्च सुभगाः सन्तु पन्थानः, सुगमाः सन्तु कदध्वानः[१],सरलाः सन्त्वपन्थानः[२], शोभनाः सन्तु शकुनाः, अनुकूलाः सन्तु पवनाः, निरापदः सन्तुः दिवसाः, कुशलं वितरन्तु कुलदेवताः, स्वेष्टं साधयन्तु साधवः—इत्याद्याशिषां राशिभिः प्रसादीकृतः पुनरपि देवदेवं साष्टाङ्गपातं वन्दित्वा श्रद्धास्पदैर्महर्षिनिर्विशेषैः श्रीवृद्ध-महात्मभिरप्युपलब्ध–प्रसादसन्देशश्च स्वाश्रयं समागत्य गृहीत-सम्भारस्तत्रत्यैरनेकैः सुहृद्वर्यैश्च प्रकटित-सौजन्यभारः सभार्यः श्रीमन्तं विघ्नेशं गणेशं संस्मरन् नौकया स्नानक्रियालीन-भक्त-जनान्दोलिततरङ्गसङ्गां गङ्गां समुत्तीर्य हृषीकेशं समागमम् । तत्र च पूर्वनिश्चितां मरुत्तरशकटिकामध्यारुह्य द्राक्तर-प्रवर-श्रीशर्ममहानुभावैः प्रदिष्टां भ्रमिबाधा-प्रशमिकां गुटिकां[३] मुखा-भ्यन्तरीकृत्य सोल्लासमुत्तरकाशीमभ्यचलम् ।

## उत्तरकाशीमार्गे मरुत्तरयानम्

**51.** अस्मदीया मरुत्तरशकटी हृषीकेशादस्मान् सर्वान् सदेहान् स्वर्गं सपदि प्रापयितुमिव द्रुतं पलायमाना क्षणमुपर्युपरि पर्वतम्, क्षणमधोऽधो गिरिशिखरम्, क्षणं पुनर्गगनतले, क्षणं पुनः पातालतले, क्षणं तदन्तराले, क्षणं दक्षिणदिशि क्षणं वामदिशि, क्षणं विदिशि, क्षणं गर्तेषु, क्षणं प्रस्थेषु[४], क्षणमुपत्यकासु, क्षण-मुत्सेषु[५] च सर्पसीमन्तिनीव विसर्पन्ती स्थाने स्थाने क्वचिद् हिमसानु–च्युत–शिलाजतु[६]–स्निग्धोपलखण्डेषु, क्वचिदविरल–गलन्मधु-मञ्जरी[७]-पुञ्जेषु वनलताकुञ्जेषु, क्वचिन्मधुपान-मुदित-

---

१. दुर्मार्गाः । २. मार्गाभावाः । ३. Avomine इति नाम-वतीम् । ४. पर्वतसमभूभागेषु । ५. जलस्रवणस्थानेषु । ६. शिलाजीत-इति प्रसिद्धौषधम् । ७. मञ्जरी शब्दो दीर्घान्तोऽपि यथा "[illegible]-मञ्जरीसनाथकरम्" (काव्यप्र०) ।

तर–मधुकर–निकरमुखरितारण्यक–कुसुम–कदम्वेषु, क्वचित् कूजत्-कान्त-कपोतपोतकुलेषु कुलायेषु, क्वचित् सारङ्ग[१]-शम्बर[२]-शशक-शरारु[३]–शल्य–शरारि[४]–शिवा–सूकरादीनां पलायनेषु, क्वचिद् विभिन्नरागानुविद्ध–कलगल[५]-खगकुल-कूजनेषु, क्वचिद् गङ्गोर्मि-मन्दानिलान्दोलित-तटतरु-वल्लरी-नूत्न-पल्लवेषु, क्वचिद् गगनाङ्गनारूढ-वर्षणाभिमुखेषु सान्द्र-नीलघन-निकुरम्बेषु, क्वचिच्च गहनवन-निवासि-किन्नर-जम्पती[६]-सङ्केत-लीला-विलास-भवनायमानेष्विव गिरिगह्वरेषु हर्ष-विस्मय-स्मेरां यात्रिणां दृशं भृशं पातयन्ती मध्याकाशान्नीचैर्गतवति विवस्वति टेहरीमस्मान् समानीतवती ।

## टेहरीपुरीविश्रामः

52. इयं हि टेहरी नगरी गङ्गाप्रवाहं पर्वतराजमन्तरा च विराजमाना किमपि विचित्रं रामणीयकं विभर्ति । यत्र चाभितोऽभ्रंलिहानि हिमसानूनि उदयास्ताचल–मध्यगस्य भगवतो विवस्वतोऽपार–गगनाङ्गन-विहरण-श्रान्त-तुरङ्गानां विश्राम-स्थानानीव शोभन्ते । मन्दानिलान्दोलिता शस्यशोभना सर्वंसहाऽपि[७] मदविघूर्णितेव राजते । उन्मीलत्पृथग्विध-पलाशप्रसून-रजोभिः सुरभिः समीरश्चापि सर्वतः शान्तिसन्ततिं वितनुते । परम्पथि मदीया जाया तु मरुत्तरत्तैलगन्धमसहमाना मुहुर्मुहुरुद्वमन्ती प्रत्यूष-प्रदीप-क्षीण-शिखामिव क्षामक्षामां वदनश्रिय-

---

१. हरिणः, चातकश्च । २. शम्बरः मृगविशेषः । ३. हिंसाशीलः शल्यः । 'सेह' इति हिन्द्यां प्रसिद्धः वन्यः पशुः । ४. 'आडी' इति हिन्द्यां प्रसिद्धः वन्यजन्तुः । ५. मधुरकण्ठः । ६. जायापती । राजन्तादिगणे पाठाज्जायाशब्दस्य दम् जम् मान्तो वा निपात्यते । 'दं कलत्रे नपुंसकम्' इत्यमरमाला । 'पत्न्यां जं दमलिङ्गत्वे' इति [illegible] ७. पृथ्वी ।

मुद्वहन्ती शिरस्तोदञ्च वितन्वती श्रमातिशयमनुभूतवती । अत-स्तत्रैकत्रानेकश्लक्ष्ण–सुमनः–सम्पत्–सम्पन्नायां[1] नृत्यत्केलि-कुलायां वितरित-प्रसादायां सुन्दरशादायां[2] रसायां[3] स्वल्पं विश्रम्य पयस्याचषकमेकं[4] निपीय ताम्बूलिकापणे[5] चैला-लवङ्ग-पूगपूर्णन्ताम्बूलदलम्मुखे निधाय मार्गान्तरायविनाशाय स्वेष्ट-देवताः संस्मरन् भूयोऽपि तदेव वाहनमारुह्यारुहन्ततः प्राचलम् । सुभगसुभागधेयतया चास्माकम्प्रस्थानेन सहैव तत्र तदानीं नभसि पयोदैर्नर्त्तितिराऽरभ्यत । येन निदाघातपक्लान्तकान्ता-कान्तास्य-विधुवल्लभो वर्षाकालः प्रारब्ध इवान्वभावि यात्रिभिः ।

## पर्वतीय-मार्गदृश्यानि

**53.** टेहरीनगरीतः केवलङ्गव्यूतिद्वयमेवासीत् सरला सरणिः । ततस्तथैवासौ कदध्व[6]-श्रेणिः । नावर्त्तत कुत्रापि सुगमः सत्पथः । तथापि मार्गमुभयतः शिखरिशिखरेषु पर्वतान्तरालेषु च पुण्यभाग्भिरेव लभ्यानि दुरधिगमानि पर्वतीयानां भवनानि कामपि शोभासाहितीं वितन्वन्ति नेत्रयोरपूर्वमुल्लासविलासं वितन्वन्ति स्म । स्थाने स्थाने शैलसानुषु शालेयं[7] तैलीनं[8] माषीणं[9] मौद्गीनं[10] गौधूमीन[11]ङ्कालायनीनङ्कौद्रवीणङ्कौलत्थीन-

---

१. लघुपुष्पवैभवयुक्तायाम् । २. मनोहरलघुतृणवत्याम् । 'शादः कर्दमशष्पयोः' इति हैमः । ३. भूमौ । ४. 'चाय का कप' इति नाम्ना प्रसिद्धम् । ५. ताम्बूलविक्रेतुर्निषद्यायाम् । ६. कुत्सितोऽध्वा कदध्वः । ७. शालीनां भवनं शालेयम् । 'व्रीहिशाल्योर्ढक्' इति ढक् । ८.–९. तैलीनं माषीणमित्युभयत्र "विभाषातिल० (५।२।४)" इति वैकल्पिकयत्प्रत्यया-भावे खञ् प्रत्ययः । तिलानां माषाणां भवनं=क्षेत्रं तैलीनं माषीणम् । १०. मौद्गीनमित्यत्र 'धान्यानां भवने०' इति खञ् । ११. गौधूमीनं कालायनीनम् इत्यादिष्वपि 'धान्यानां भवने०' इति खञ् ।

श्चाणकीनश्चेत्यादीनि विविधानि धान्योद्भवक्षेत्राणि विचित्राणि मनोहरन्ति स्म। शुकाङ्गरागेषु केदारिकाखण्डेषु तु पीतानि शिरीषकुसुमानि वनवनिताया हरितबृहतिकाया[१] हरिद्राभदशेव[२] सर्वेषाञ्चेतांस्यचूचुरन्। नदीमातृकेऽपि पर्वतप्रान्ते तत्र नड्वला:[३] शार्करिला:[४] सिकतिलाश्च[५] प्रदेशा दृशमस्पृशन्।

**54**. अथ देवयानमिवारुह्य गगनाध्वना गिरिमुपर्युपरि गच्छद्भिरस्माभिरवलोकितं यत् प्राज्ये[६] प्रकृति–साम्राज्ये तत्र पुण्यवन्त: सन्त एव वसन्त: स्वर्गसौख्यं लभन्ते। यतो नन्दन-वननिर्विशेषेषु वनस्थलेषु तेषु कुत्रचिद् विश्वासोपगमात् सुमनोवल्लीवलयित-नीरदनील-तमालजालतले नवशाद्वलं नि:शङ्कमधिशयाना: शशकशावकास्तिरस्कुर्वते सुरवसतिसुखानि, कुत्रचित् पुञ्जीभूत–विविध–सुम–समवाय-मकरन्द-सान्द्रासु शाखिशाखासु केलि-कलित–केकिन: केकाभिर्मुखरयन्ति गिरि-दरिमुखानि, कुत्रचिद् विजृम्भमाण–वितत–स्कन्ध-पल्लव–जालेषु काननेषु समुड्डीयमानं वारिगर्भोदरघन–सङ्घटनमिव[७] लोलुक्यते कालायसकल्पं पुंस्कोकिलकुलम्, कुत्रचित् परिपक्वशालि-कलमासु केदारकोष्ठिकासु शाखावसक्तस्तबकानां सहकारमहीरुहाणामधो विषाणकोटिना कण्डूयमान: कुरङ्गोऽनुकूलयति परि-

---

१. हरितवर्णोत्तरीयवसनस्य। 'द्वौ प्रावारोत्तरासङ्गौ समौ वृहतिका तथा। सव्यानमुत्तरीयं च" इत्यमर:। २. पीतवर्णवस्त्रान्तभागेव। दशा=किनारी–मगजी इति हिन्द्याम्। ३. नडाधिकप्रदेशा:। ४. अश्मप्रायमृदधिक–बालुकायुक्तप्रदेशा: ५. बालुकाबहुल-प्रदेशा: ६. प्रचुरे। ७. वारिगर्भाणि उदराणि येषां ते तादृशा: घना:, तेषां सङ्घटनम्। अनेन घनानां सम्पूर्णजलपूर्णत्वं ज्ञेयं तेन च विशेषकालिमा द्योत्यते।

रम्भारम्भ-भाव-स्फुरद्विलास-पुलकिता[1]मीषन्मीलित-लोचनां निजाङ्गनाम्, कुत्रचिद् गङ्गातरङ्गान्दोलित-विविध-वनवल्लरी-वितानेषु विहगा असकृच्चटुल-चञ्चुपालि-कण्डूयनेन रोमाञ्च-यन्ति जीवितेशानीम्, कुत्रचिच्चाटुकार-कामुक इव कपोत-पोतकः कमलकोमल-कवलोपायनैर्घुणघुणायानो रमयति रिरं-सावतीम्पारावतीम् । अथ कुत्रचिन्निविड-विपिन-तुङ्गतर-तरुवर-विलम्बि-लतासन्ताना वनकिन्नराणां विलासलीलान्दोलनदोला[2] इव पेप्रियति[3] सहृदय-हृदय-स्थलीम्, कुत्रचित् पथिककुल-कुटु-म्बिनी-मनोमृगहननादिव शोणितीभूतानि किंशुकसुमनांसि कर-पत्राणीव प्रेक्ष्यन्ते वियोगिजनैः, कुत्रचित्तरूणामधस्तात् पलाशि-शाखाभ्रष्ट-शुकशावक-सुखोपवेशायेव खेलोन्मुखैर्गिरिचरबालकैः सुमनोभिर्मञ्जु मण्डयन्ते मृद्वेदिकाः, कुत्रचिच्च मधुगन्धान्ध-मधुकरनिकर-कम्पित-वनसुमनः-समूहा माञ्जुल्यमुद्वमन्त इव सञ्चारयन्ति सुरभिस्रोतोवहाम् । एवमिह भव्यविभा-सम्भार-संशोभितायाः प्रकृतिदेव्या दिव्यश्रिया समालिङ्गित-चेतोभिर-स्माभिरध्वनि न त्वपगतघनेऽनेहसि घर्मोर्मि-वितीर्णः कश्चन खेदोऽनुभूतो न वा समविषमोच्च-नीचैस्तिर्यङ्-मार्ग-परिक्रमणेन भ्रमिबाधैवासादिता । क्षणमिव प्रलम्बसमयमुल्लङ्घ्य दिवसा-वसान-वाद्य-झङ्कारेष्विव परितः कुलायेषु कूजत्सु वनकपोतपोत-केषु, विपिन-विटपि-विटपेषु[4] पीतवर्ण-मुनिजनवल्केष्विव लम्ब-

---

१. आलिङ्गनेन रोमाञ्चवतीम् । २. हिंदोला इति हिन्द्यां प्रसिद्धम् । दोलयति दोल्यते वा इति दोला । दुल उत्क्षेपे ( चुरादि ) धातोः अच् (३।१।१३४) अथवा घञ् (३।३।१९) ३. पौनः पुन्येन प्रीणाति । प्री धातोर्यङ्लुकि लटि । ४. शाखाविस्तारेषु । 'विस्तारो विटपोऽस्त्रियाम्' इत्यमरः ।

मानेषु रविरश्मिजालेषु, अस्तोन्मुखं दयितमभिवीक्ष्य शोक-वेगा-दिव निमीलितदल-लोचनासु नलिनीषु, अपरापार-पारावार-पयसि निपतिते नातिप्रखरे प्रभाकरे, समुदिते च कुपित-कपि-कामिनीकपोलकल्पेऽतनीयसि[1] चन्द्रमसि मरुत्तरोत्फालितमृत्स्ना स्नाता वयं विश्वविश्रुतयशोभास्वराम्पुण्यप्रकरप्रकाशिकामुत्तर-काशिकामागमाम ।

## उत्तरकाशी–वर्णनम्

**55.** गङ्गोत्तरीं टेहरीपुरीमन्तरा विराजमाना उत्तरकाशीति-लोकैरभिधीयमाना विश्वनाथपुरीयमाप्रथमयुगात् पुण्यस्थलीना-म्मूर्धन्यतामुपगता कामप्यभिख्याम्प्रकृतिसुन्दर्या विदधती मोद-यति हृदयानि समागन्तुकानाम्भक्तानाम् । अस्या महनीयम्मा-हात्म्यं समस्त-शास्त्रैर्धर्माचार्यैः सम्प्रदायप्रवर्त्तकैरुपासकवर्यैर्भग-वद्भक्तप्रवरैश्च सडिण्डिमघोषञ्जोघुष्यते । अनेकानि जन्मानि लब्ध्वाऽपि दारुणतपांसि तप्त्वाऽपि यम-नियमोपवासादिभिः शरीरं शोषयित्वाऽपि प्राणी मोक्षमनभिपद्यमानो विश्वनाथनगर्या-मिह क्लेशादिमन्तरा देहपातेनैव तमञ्जसा प्राप्नोतीति मन्य-मानाः कियन्तः सन्तः साधवो महात्मानश्च कलि-कलुष-संहारि-काङ्क्षाशिकामिमामुपेत्य केचन गङ्गाकूलं निकषा, केचन च गिरिगह्वरेषु कृताधिवासा भगवतो विश्वनाथस्य कृपया सायुज्ये-नात्मानं संयोजयन्तीति ।

**56.** निश्चप्रचमियं नगरी मातेव महनीया, जनिमहीव पूज-नीया, आचार्याणीव समर्चनोया, कान्तेव कमनीया, शशिकलेव शिवप्रिया, सुधाधारेव विबुधसेविता[2], अमरावतीव सजीवा[3],

---

१. चन्द्रोदये चन्द्रविम्बस्य किञ्चिदारक्तत्वात् प्रणयकुपितायाः कामिन्याः कपोलतुल्ये अतनीयसि चन्द्रमसि=पूर्णचन्द्रे । २. विबुधैः= देवैः, विद्वज्जनैश्च सेविता । ३. देवगुरुसहिता, अग्निसहिता च ।

हिमसुतेव विनायकवती[1], पतिव्रतेव पवित्रचरित्रा, भागवत-कथेव भक्तिपूर्णा, छन्दः-पुस्तिकेवाद्रितनयोपेता[2], व्याकृतिप्रकृति-रिव प्रथम-मध्यमोत्तमपुरुषवती वसन्तसमृद्धिरिव प्रमोदवर्धिनी, प्रावृडिव रजः[3]-प्रशमिनी, शरदिव निर्मला, शिशिरश्रीरिव मित्रप्रिया[4] च वरीवर्त्ति। यत्र हि मालिन्यं पयःपङ्केषु न जन-मानसेषु, रागः किसलयेषु न स्त्रीजनेषु, किन्नरता[5] देवयोनिषु न नागरिकेषु, विशालता हृदयेषु न वनराजिषु, क्षीणता कल्मषेषु न पुण्य-कर्मसु, विलम्बता पादपेषु न शुभकृतिषु, वर्णनिपातो व्याकरणपुस्तकेषु न सामाजिकजनेषु, चिन्तनञ्च शास्त्रवचसि न पुनर्नश्वरवपुषि। या च शुभदर्शनापि त्रिलोचनवती, पवित्रापि पुष्पवती, उत्तराऽपि सदक्षिणा, शिवाधिष्ठिताऽपि शिवा[6]-शून्या, बुधसेविताऽपि सुराशून्या, दैत्यरहिताऽपि सदानवा, अकुली-नाऽपि[7]सद्वंश-विभूषणा, जनबहुलाऽपि[8] ह्यद्वितीया, शान्ताऽपि

---

१. विशिष्टनायकवती, पक्षे गणेशवती च। २. पार्वती-विराजिता, छन्दः- पुस्तिका पक्षे च अद्रितनयानामकछन्दोवती। यल्ल-क्षणं छन्दोमञ्जर्यां 'नजभजभा जभौ लघुगुरुबुधैस्तु गदितेयमद्रितनया" ३. रजोगुणः, धूलिश्च। ४. सूर्यप्रिया, सुहृत्प्रिया च। ५. नागरिकपक्षे किन्नरता=कुत्सितनरता। ६. 'स्यारी' इति हिन्द्यां प्रसिद्धो राजस्था-नीयो वन्यजन्तुः। ७. कुलस्य सद्वंशस्यापत्यं कुलीनः, न कुलीनः अकु-लीनः=नीचवंशज। अकुलीनाः जनाः यस्यां सा अकुलीनजना। अकु-लीनाऽपि सद्वंशविभूषणेति विरोधः। किन्तु कौ=पृथिव्यां लीनः=मग्नः कुलीनः, सर्वथा दीनः इत्यर्थः। तादृशो न भवतीति अकुलीनः। अकु-लीनाः=महोन्नताः जनाः यस्यां सा तथेति विरोधपरिहारः। ८. जन-बाहुल्येऽपि अद्वितीया=न द्वितीयो जनो यस्यां सेति विरोधः। तत्परि-हारस्तु अद्वितीया=अनुपमा सर्वोत्कृष्टा इत्यर्थः।

सोग्रा[१], वामाऽपि[२] सदापूर्वा, विभववती[३] अपि सभवा, दृष्ट-मन्यु[४]-सम्भाराऽपि कृतमन्युबहिष्कारा च जेगीयते जगति । यत्र च कान्ताराग[५]रागिणश्चतुष्पदा न द्विपदाः, वामोन्नमत्पयोधर-विहितलास्यविलासाः[६] शिखावला न विचक्षणाः, उन्मत्तास्तरवो न[७] मानवाः, दुर्वर्णो[८] धातुर्न यात्रिजनः । किमन्यत्, यत्र तु सर्वा एव स्त्रियो यशोदाः, यशोधराः, सत्यवत्यः, रुक्मिण्यः, विशारदाः, अनसूयाः, गौर्यः, इन्दिराः, विजयलक्ष्म्यः, ललिताः, पार्वत्यः, सर्वमङ्गलाः, वल्लभाश्च ।

## उत्तरकाश्यामवस्थानम्

**57.** अत्र हि यामैकावसन्नायां निशायां कामुकेनेव कुमुदिनी-नाथेन पौरन्दर्या दिगङ्गनाया दिव्यानने मुक्ताचूर्णकल्पे शुचि-रश्मिजाले विकीर्यमाणे, लज्जाभारेणेव च धवलिमानमादधति तद्वपुषि भगवते परमात्मने धन्यवादानर्पयन्तो वयं सर्वे मरुत्तर-

---

१. शान्ता अपि सा+उग्रा=सा नगरी रौद्रा इति विरोधः। तत्परिहारे च उग्रेण=शिवेन सहिता । २. वामा=सव्या अपि पूर्वा इति विरोधः । परिहारे तु वामा=मनोहरा । 'वामं सव्ये प्रतीते च द्रविणे चाति सुन्दरे' इति विश्वः । ३. विगतो भवः=क्षेमो यस्याः सेति विभवा, तद्वती विभववती एतादृशी अपि सभवेति विरोधः । भवेन= शिवेन सहितेति परिहारः । 'भवः क्षेमेश-संसारे सत्तायां प्राप्तिजन्मनोः' इति मेदिनी । ४. क्रोधो यज्ञश्च । ५. चतुष्पदपक्षे कान्ता+अग+ रागिणः इति पदच्छेदः । द्विपदपक्षे च कान्ता+राग+रागिणः इति पदच्छेदः ६. वामैः=सुन्दरैः, उन्नमत्पयोधरैः=समुन्नतमेघैः विहितः लास्यविलासो यैस्ते इति मयूरपक्षे । वामानां=प्रमदानां, उन्नमत्पयो-धरयोः=समुच्छ्रितकुचयोः, विहितः लास्यविलासो यैस्ते—इति विच-क्षणपक्षे । ७. धत्तूरवृक्षाः, प्रमत्ताश्च । ८. रजतधातुः दुष्टवर्णश्च ।

यानादमुष्मादवातारिष्म । तत्र च जयपुर-राजकीय-शिवमन्दिर-व्यवस्थावस्थिता अस्मत्सुहृद्वर्याः शर्ममहोदया आवां प्रतीक्षमाणा आसन् । अतस्तैः क्रियासमभिहारेण समनुरुध्यमानेन मया रात्रौ तेषामेव सौजन्यस्निग्धे शुभातिथ्येऽक्रियत प्रणयः । अतस्तेषामावासे निर्वर्त्तित-स्त्रीजनोचिताचारा विहिताऽऽहारा मम कुटुम्बिनी तु शर्मणां श्रीमत्या सार्धं वार्ता विदधती नातिचिरं निद्रां न्यक्कृतवती । परं सुहृद्वर्यैः सह समुपविश्य स्वादूपभुज्य भोज्यजातं निपीय च प्रालेयं पानीयं मम शयनं समया कृतास्तरणैस्तैः क्रमशः परिपृष्टस्य सर्वमादितो यात्रोदन्तं निगदितवतो मे तु रात्रिरेव व्यरंसीत् । प्रातश्च समुपयाति कर्णकुहरमधुरे मधुमत्त-शकुन्तानां मञ्जुझङ्कारे सम्पादितदिवसारम्भक्रियः सपत्नीकोऽहं कथमपि तुषार-शिशरे गङ्गानीरे स्नात्वा पूजापाठादिकञ्च सम्पाद्य निखिल-देव-दानव-मानव-मुकुट-कोटि-मणि-मरीचि-चुम्बित-चरणसरोजं सकलसुरासुर-रचित-रुचिर-संस्तवं विफलीकृतान्धक-दम्भ-स्तोम-समारम्भं विश्वस्थितमपि हृदयविराजितं कामहन्तारमपि कामप्रदातारम्, अभवमपि सभवं, भीममपि शिवं, शितिकण्ठमपि श्रीकण्ठं भगवन्तं विश्वनाथं पूजयितुं गृहीतार्चासम्भारस्तन्मन्दिरमभ्यगच्छम् । तत्र च पयःस्नपनपुरःसरं यथासम्भृतसम्भारैरशरण-शरण-हरचरणसरोरुहसमर्चनं सम्पाद्य साप्रतिरथं रुद्रसूक्तं समावर्त्य, परिक्रमार्धपूर्वकं साष्टाङ्गपातञ्च प्रणिपत्य स्वप्रणीतेन कवित्वगीतेन भगवत्संस्तवमेवमतीतनम्—

## विश्वनाथ-प्रार्थना

जय जय शङ्कर! शम्भो! अशरणशरणद! विधेहि मयि करुणाम् ॥

मम विपुलं कुरु कुशलं नाथानाथस्त्वदीयशरणमगाम् ॥ १ ॥

त्वं चेत् कुरुषे न दयां वद मां दीनं क ईदृशो रक्षेत् ॥
पतितोऽहं बहुविधिना दयार्णवा नहि भवादृशाः सर्वे ॥ २ ॥
पालय पालय शङ्कर ! किङ्कर इह ते क्व यानि कं शरणम् ॥
चरणं तव मम शरणं पापाचरणं न पालयत्यपरः ॥ ३ ॥
कठिनैः पूजा-पाठैः सेवां कृतवति निरन्तरं देवाः ॥
प्रीता ददति दिवं वै कृतेऽपि दुःखे न दुःखतस्तरणम् ॥ ४ ॥
बुद्ध्या बुद्ध्वैतदहं विबुधानितरानलं न संसेव्य ॥
परमेश्वर ! तव चरणं सेवे देवेश ! मुक्तिदं सततम् ॥ ५ ॥
कृपया परया भवता कृता महान्तः पुरा पुरारेऽद्य ॥
अथ दीने मयि करुणा क्व गता सा ननु गतान्यगतिकोऽहम् ॥६॥
भो शिव ! शङ्कर ! शम्भो दम्भो यदपि म निवर्तते मनसः ॥
कथमपि तदपि न चिन्ता जयति स्वामिनि कृपाकरे भवति ॥७॥
शिव! शङ्कर! शिव! शङ्कर शिव! शङ्कर इति निरन्तरं रटनम् ॥
अभ्युदयं मम कुर्यादपहृत्यार्त्तिं द्विषोऽप्यघं जडताम् ॥ ८ ॥
करुणाकर ! शशिशेखर ! हर ! हर ! महादेव ! पार्वतीनाथ ॥
पातय पातय मय्यपि किङ्कर-काङ्क्षे दयादृशं झटिति ॥ ९ ॥

**59.** एवं प्रार्थनान्ते पुनः प्रणम्य बं बं बं महादेव ! हर ! हर ! हर ! महादेव ! इति साम्रेडमुच्चैरुच्चारयन् लम्बमानामसमानां विशालघण्टामाहत्य श्रीविश्वनाथार्चक-प्रदत्तं प्रसादस्वरूपं सकुसुमं बिल्वदलं भूयो भूयो हृदि शिरसि नयनयोश्च स्पर्शयित्वा सहधर्मिण्याः समुज्ज्वले कौशेयोत्तरीयाञ्चले च तन्निक्षिप्य 'पूर्णाः सन्तु मनोरथाः, निरन्तराया भवन्तु यात्रामार्गाः, प्रतिपदमनुपलं रक्षां तन्तनीतु विघ्नभयङ्करः श्रीशङ्करः, इत्याद्याशिषां राशिभिश्चाराधकैः सभाजितो बहिर्निर्गच्छन् द्वारि मृद्भाण्डस्थं भस्म भाले विलिप्य प्रथानुसारं स्वल्पञ्च तत्र समुप-

विश्य स्वकीयमावासं प्रत्यागच्छम् । भोजनादिभ्यश्च निवृत्य सुखस्वापेन घटिकायुगलं व्यनैषम् ।

**60.** अथापराह्णे तत्राधिगतमदागमनशुभोदन्तास्तत्रत्या महान्तो धीमन्तो जना मदाध्यक्ष्ये सुधीसभामेकामायोजितवन्तः । यत्र हि भगवत्याः सुरसरस्वत्याः सम्बन्धे परमात्मचिन्तने च महद्भिर्विद्वद्भिः स्वकीयाः समुद्गाराः समतनिषत । अपूर्वा ह्यासीत् साऽपि सभाशोभा । एवमातिष्ठद्गु[1]सभाकार्यं सम्पाद्य तत्समाप्तौ भूयो भगवन्तं भर्ग[2] नमस्कृत्य सम्पादित-सायन्तन-सर्वकार्योऽहं निद्रा द्राघणीयेति ससुखमशेशयम्[3] ।

## उत्तरकाशीतः प्रस्थानम्

**61.** एवं दिनद्वयमिह सोल्लासं यापयित्वा पौरुहूत्या आशा-विलासिन्याः सुवर्णमये विमले मुकुरे इव समुदञ्चति भगवति भास्वति प्रातः कृत्यं समाप्य समामन्त्र्य च सुहृत्प्रवरमावाभ्यां मरुत्तरयानेन लङ्काभिधेयं पर्वतीयं ग्रामं गन्तुं भूयोऽपि सम्बन्धो-ऽनुवद्धस्तेनैव नतोन्नतेन समविषममार्गेण । उत्तरकाश्यामेव तत्र पुरो यियासुभि[4]र्यात्रिभिर्लभ्यते सीमाक्षेत्रीयं राजकीयमाज्ञा-पत्रम् । अस्मत्सुहृत्सूरिभिस्तत्प्रबन्धस्तु पूर्वस्मिन्नेव दिने सम्पा-दितोऽतो नाभूयत केनाप्यन्तरायेण तदानीम् । येन फरफराय-माणमस्मदीयमेव मरुत्तरयानं सर्वप्रथमं ततः पुरः प्रस्थितम् ।

---

१. गोदोहनकालपर्यन्तम्, तिष्ठन्ति गावो यस्मिन् काले दोहायेति तिष्ठद्गु, अर्थात् दोहनकालः । "तिष्ठद्गु॰" इत्यव्ययीभावनिपातनात् साधुत्वम् । तिष्ठद्गुपर्यन्तमिति आतिष्टद्गु । 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः । २. शिवम् । ३. शीङ् लुङि लङि रूपम् । ४. गन्तुमि-च्छद्भिः ।

## पर्वतीयाः स्त्रियः

**62**. अथ च तद्यानं नगराद् बहिरुभयतो मार्गं नतोन्नतेषु पर्वतीयप्रदेशेषु ग्रामटिकासु विहितावासानां मरुत्तरयानावलोकनकुतूहलाकलितानां चम्पककलिका-कलापावदात-विलसद्गौरावयवानां कर-युगलधृतकाचवलयानां परिधानीकृताप्रपदीनानां[1] स्निग्धाञ्जनाञ्चितनयनाभिरामाणां, ह्यक्तकोत्तालसुहासपल्लविताधराणां, प्रोत्तुङ्ग-स्तन-मण्डल-विलुठन्मञ्जु-गुञ्जाहाराणां, ग्राम्याभरण-भूषित-सुभग-शरीराणां, त्वरित-सञ्चलन-कम्पनविगलित-स्तनावरणानां, कपटकण्डूति-दूरीकृत-मुखावगुण्ठनानां, विजितारविन्दवदनानां, रम्भामहीरुह-पीवरोरुयुगलानां, हिमाचलीयानां ग्रामललनानां नीलकमलकल्प-पक्ष्मल-चञ्चललोचनयुगलाञ्चलं हठादस्मदभिमुखं कारयत्, क्वचिच्च कूष्माण्डमण्डितमण्डपान् समुच्चेष्टकागृहानारुह्य करतल-ताल-तरलकरवलयानां नवं वयश्चुचुम्बिषन्तीनां धम्मिल-मतल्लिकां वहन्तीनां हार-नीहार-घनसार-गौराङ्गीणां दन्तिदन्तकान्तिकान्तदन्तद्युतीनां घनाञ्जनानञ्जितेनापि लोचनयुगलेन नलिनदलं मलिनतमं वितन्वतीनां सरलवीक्षितैश्चाध्वनीनानां मनोभवाय द्वारस्थ-स्तनयुगल-मङ्गल-कलशे हृदयप्रदेशे स्वागतमिव प्रयच्छन्तीनां बालयुवतीनां मनांसि समुल्लासयद्, अथ कुहचिन्नैकविधकुसुमरोचिःसञ्चय-रोचिष्णुमहीरुह-शाखा-दृढपिनद्ध - दोलाधिरूढासु स्रंसमानोत्तरीय-दृश्यमान-नात्युन्मिषित- कुचकुड्मलासु ग्रामकुमारिकासु यात्रिणां दृशं पातयद्, कुहचन चोदग्रशाखावलम्बित-सहकारप्राप्तये समुद्भुजानां स्तननितम्बस्रस्तदुकूलानां ललनानां नयनोत्सवं सन्तानयद् यावदेव गव्यूत्यर्धमध्वान-

---

१. पादाग्रपर्यन्तलम्बमानवसनानाम् ।

मतिक्रम्य गिरिशिखरमध्यारोहत् तावदेव तस्य किमप्येकं यन्त्रं नियन्त्रणाद् बहिर्भूतमिवाभूत्। येन सहसैवास्माकं शकटिका प्रणयरुष्टा मानिनी कामिनीव मार्गाचलव्यतिकराकुलिता सुरसरिदिव च तत्रैव स्थितवती। किन्तु शकटिका-सञ्चालकस्य यान्त्रिकस्य[1] नयविनयानुनयादिभिर्मानमपहायेव होरार्धमवस्थाय ततः पुनः प्राचलत्।

## गर्त्तपतिता मरुत्तरशकटिका

**63.** ततो मार्गे तानेवोच्चावचोपत्यकान् दुरूहावरोहमार्गान् पृष्ठतः कृत्वा भगवन्नामकीर्त्तनं वितन्वद्भिर्लङ्काभिमुखं शैलश्रेणीरुपर्युपरि व्रजद्भिरस्माभिर्मरुत्तरयानत एव लोचनगोचरीकृतं यदेकत्र नीचैः पातालतलमिव प्रविविक्षौ गाङ्गेये प्रवाहे श्येनाननभ्रष्टा विशीर्णपक्षतिः कपोतिकापोतिकाकल्पा कापि भग्नावयवा प्रयत्नप्रेक्षणीया मरुत्तरशकटिका पतिताऽस्ति। दृष्टिपथपथिकायितया तया भीतिभीता इव चित्रविलिखिता इव वाचंयमा इव स्तम्भित-कण्ठा इव समुद्भूत-बाष्पोद्गमा इव च विस्मयाद्वक्षःसंन्यस्तहस्ताः स्थूलं स्थूलं निःश्वसन्तो नैयायिका इव नाप्यनुमानैर्वाक्कीलका इव नापि च तर्कैः कमपि निश्चयहेतुं विन्दन्तस्ततः सङ्केतयन्तः परस्परं मन्दं मन्दमवादिषुः सरोमोद्गमं यात्रिणः— हन्त, कथमेषा रसातलसादभूत्? कस्येदं हस्तलाघवम्? केनेदमुपन्यस्तम्? को वा मदिरामत्तश्चक्री[2] एनां चालयति स्म? हा कासां कासां सीमन्तनीनां भालतः सौभाग्यसिन्दूर-बिन्दवो विलुप्ताः? काः काः सञ्जाताः स्वभ्रातृवियुक्ता भगिन्यः? काः का निमग्ना अपारे सुतशोकपारावारे

---



१. 'मिस्तरी' इति नाम्ना भाषायां प्रसिद्धस्य। २. चक्रधारी। हस्ते परिगृहीतमरुत्तरसञ्चालनचक्रः।

जनन्यः ? केषां केषां जराजुषां दीर्घायुषां मध्ये विच्छिन्नाः स्वाश्रययष्टिकाः सहसा ? के के स्रवत्-पयोधरा विलपन्तीर्जनयित्रीः परित्यज्य चिरं सुप्ताः स्तनन्धयाः शिशवो मृत्युशयने ? के के प्राणप्रियान् सहोदरान् समर्प्य निष्ठुराय कालाय प्रकृष्टं क्लिष्टाः सहोदराः ? के के चिरसंस्तुतानभिन्नहृदयान् सहृदयान् सुहृद्वर्यान् विस्मृत्यान्तकान्तिकमत्यन्तं याताः? के केऽथ वात्सल्यस्वरूपिणीः स्वजननीर्निपात्य सर्वथाऽसह्ये शोक-शोचिष्केशे[1] प्रणष्टाः ? कैः कैश्च पत्नीजीवनालम्बनैर्गेहद्वारि नेत्रे विस्फार्य सक्षणं प्रतीक्षमाणा रूपलावण्यसमुज्ज्वला निरवद्यवृत्ताः पतिजीविता दयिता निरवधिके दुःखोदधौ पातयित्वा यमसदनं झटिति प्रास्थीयत । हन्त हन्त! दुरतिक्रामता कालगतेः, अप्रतिरोधा कर्मरेखा, नितरामेव निष्ठुरतराणि हि भवन्ति दुर्दिष्टचेष्टितानि । नैव कश्चन विनेश्वरेच्छां क्षणमप्युच्छ्वसितुं शक्नुयात् । भवन्ति भवितव्यानां द्वाराणि सर्वत्र । को वा जानाति स्म यदेतेषामेषा दशा भविष्यतीति शोचं शोचं लङ्काम्प्रति प्रसर्पतामस्माकं क्षणमिव महान् समयो व्यत्यगात् । समासन्ने च मध्याह्ने लङ्कामुपेत्य मरुत्तरयानतः सर्वेषामस्माकं सम्बन्धेनाच्छिद्यत ।

## लङ्कास्थली—वर्णनम्

**64** इदमासीदभितस्तुषारसानुशोभितं प्रकृतिदेव्याः सुन्दरं मन्दिरमिव वल्गु-वल्गदच्छ-च्छविभारं मञ्जुमञ्जीरशिञ्जितमिव[2] सदाचरणमण्डितं[3] गोलस्थलम् । अत्र हि प्रलम्बाः साल-

---

१. अग्नौ । शोचींषि ज्वालाः केशाः इवास्य । 'नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वम् । २. सुन्दर-नूपुरक्वणनमिव । ३. नूपुरक्वणनपक्षे सदा+चरणशोभितम्, गोलस्थलपक्षे च सद्+आचरणशोभितमिति पदच्छेदः ।

सालशाखिनः, मध्ये मध्ये नात्युच्चतरुशाखालिङ्गिता मन्दानिलान्दोलिताः कुसुम-सम्भारावनता मकरन्दमत्त-कूजन्मधुव्रता ललिता लताः, नतोन्नतस्थान-प्रवहन्निर्झरनिकट-नरीनृत्यमान-मयूरा उपत्यकाः, नवशाद्वलेषु कलङ्कूजन्तः समुत्पतन्तश्च विविधा विहगाः, सर्वतो वमन्मञ्जुमाञ्जुल्याः कुसुम-मञ्जर्यः, परम-हरीतिम-सम्भृत-वनौषध-समृद्धाः शैलश्रेणयः, गगनगतानि रजतकूटनिकुरम्बाणीव नीहारशिखराणि च कामप्यभिख्यां प्रख्यान्ति स्म। सहैव तत्र कितव[१]-कायस्था[२]-क्षोट[३]-मालूर[४]-क्षुर[५]-कण्टकिताः कुमारी[६]-भारद्वाजी[७]-ब्राह्मणी[८]-मागधी[९]-गणिका[१०]-जाति[११]-सन्ततयोऽपि युवायन्ते[१२] स्म। मध्येस्थलश्चानुक्रमङ्कितिचन शारदाम्भोधरधवल–पटमण्डप–मण्डलानि समुच्छ्रितान्यासन्। यैर्लघ्वी नगरीव राजते स्म सा चार्वी[१३] वनस्थली। शतत्रयाधिकैर्यात्रिभिः सङ्कुलेऽपि निराकुलेऽत्र रम्यस्थले आपणिकैस्तृणास्तरणासु[१४] विपणिकासु क्वचित् कटाहिकासु चालन्या[१५] शष्कुल्यः समुत्तार्यन्ते स्म, कुत्रचित्तैलवत्य एव रसवत्यः कुण्डलिन्यः सम्पाद्यन्ते स्म, कुहचिद् वर्तुला मोदका निबध्यन्ते स्म, क्वचिद्वटका अपूपाश्च पच्यन्ते स्म। क्वचित्तु विक्रायकैः[१६] क्रायकैः सह वस्तुमूल्यमुदिश्य कलहोऽपि वितन्यते स्म।

---

१. धत्तूरः। २. हरीतकीवृक्षः। ३. अखरोटनाम्ना प्रसिद्धः वृक्षः। ४. बिल्वः। ५. तालमखाना-इति नाम्ना प्रसिद्धतरुः। ६. घीकुमारी वनौषधिः। ७ वनकार्पासी (जगली कपास)। ८ भारंगी। ९. पिप्पली। १०. यूथिका (जूही)। ११. मालती चमेली। १२. युवतयः इव आचरन्ति स्म इति युवायन्ते स्म। १३. मनोज्ञा। १४. तृणानामास्तरणं यासु ताः। १५. चालनेन, 'झर' इति नाम्ना प्रसिद्धेन। 'चालनी तितउः पुमान्' इत्यमरः। "क्षुद्रच्छिद्रशतोपेतं चालनं तितउः स्मृतः" इति कात्यश्च। १६. विक्रेतृभिः।

क्वचिच्च भोजनसामग्री-सम्भरण-व्यस्तैः पुरुषैरापणाः[१] सामुद्रं सामुद्रं, मरीचं मरीचं, धान्यकं धान्यकं, रामठं रामठं, काञ्चनी काञ्चनी[२], जीरककणा जीरककणाः, तण्डुलास्तण्डुलाः, शर्कराः शर्कराः, आज्यम् आज्यम्, तैलं तैलमिति वस्तुक्रयकोलाहलेन मुखरिताः क्रियन्ते स्म। अथैकत्र यात्रिणश्चुल्लिकां ज्वालयन्ति स्म, परत्र मृन्मये भाजने खजाकया[३] कृशरिका[४]-मालोडयन्ति स्म, कुत्रचन माषमुद्‌गसूपं वेसवारेण[५] संस्कुर्वन्ति स्म, अन्यत्र पिठरे[६] स्निग्धमोदनं पचन्ति स्म, अपरत्र शुष्कगोमयाग्नौ वाटिकाः परिवर्तयन्ति स्म, अपरतः पिष्टपचनेषु[७] करपट्टिका[८]-स्तापयन्ति स्म, अन्यतः स्वेदन्यां[९] श्रोणां[१०] सम्पादयन्ति स्म, परतोऽथ भुक्तशेषान्नवितरणेनानाथान् सन्तोषयन्ति स्मेति परमाद्‌भुतमासीत् तदानीं तत्रत्यं चाकचक्यम्। पुनः क्वचन तु धनसाधनहीना दीना जनाः शुष्काभिः शष्कुलीभिर्भ्राष्टभर्जितैः[११] पृथुकै[१२]र्हरिमन्थकै[१३]र्मसूरैर्मुकुष्ठकै[१४]र्गोधूमैर्धानाभिरेव[१५]वा, अन्ये च केचन सन्धितस्निग्धैः[१६] भ्रष्टापूपैः[१७] पौलिभिः[१८]

---

१. क्रयवस्तुशालाः। २. हरिद्रा। ३. दर्व्या 'करछी इति हिन्द्यां प्रसिद्धया। ४. खिचडी इति हिन्द्यां प्रसिद्धाम्। ५. छौंकन भंगार इत्यादिनाम्ना प्रसिद्धेन। ६. ओदनादिपचनभाजने। ७. ऋजीषेषु, 'तवा' इति प्रसिद्धेषु। ८. रोटियां=इति नाम्ना प्रसिद्धाः। ९. 'छोटी कडाही' इति नाम्ना प्रसिद्धायाम्। १०. यवागूं (लपसी)। ११. भ्राष्टभर्जः येषां तैः, तारकादित्वादितच्। (भाड़ में भुने हुये)। १२. 'चिवडा' इति नाम्ना प्रसिद्धैः। १३. चणकैः। १४. वनमुद्‌गाः, मोठ इति हिन्द्यां प्रसिद्धाः। १५. धाणीति भाषायां प्रसिद्धाः। १६. सन्धितेन=आचार (ल्यौंजी) इति नाम्ना हिन्द्यां प्रसिद्धेन तैलपक्वेन आम्रादीनां शाकेन स्निग्धैः=सिक्तैः। १७. टोस्ट इति नाम्ना प्रसिद्धैः। १८. डबल रोटी इति नाम्ना प्रसिद्धाभिः।

पर्पटैश्च[1] सग्धिं[2] विदधानाः प्रवृद्धामशनायां[3] धरणिधरधरायां तत्र शाम्यन्ति स्म ।

## सरोवरः

**65.** अहन्तु तदानीं तृणास्तृतेषु मृद्गेहेषु तत्रावस्थानमननुकूलमिवाकलय्य पुरोयानमेव निश्चितवान् । यतः स्थानादस्मादूर्ध्वमवर्त्तत चरणसञ्चरणमार्गः, तत्रापि सार्धगव्यूतिमितो मार्गस्तु 'भैरवघाटी' इति प्रख्यातिमुपगतो वस्तुतो महान् भैरव एवासीत्, न तत्रासीत् कुत्रापि सरलः पन्थाः । प्रलय-पारावारोत्ताल-तरङ्गाननुकुर्वन्त आसन् नतोन्नता अध्वानः । यत्र तत्र तु जनत्रयी अपि एकपङ्क्तौ गन्तुं न प्रभवतीति श्रावं श्रावं लोकतो वेपथुमती मत्पत्नी तु तत एव गङ्गां नमस्कृत्य प्रतियानमेव निश्चितवती । परन्तु पुनः शतशो लोकानां गतागतं विलोक्य कथमपि साहसं सञ्चित्य यद्वा तद्वा भविष्यतीति निश्चित्य स्वकीयं सम्भारं तत्र प्रापयितुं समुचितेन शुल्केन वनान्तप्रेङ्खणं[4] भारवाहिनमेकं निर्णीय पर्वतारोहणात् पूर्वं स्वल्पं विश्रान्तुं तदुपदिश्यमानमार्गाविावां कतिचन यात्रिणः सह नीत्वाऽऽत्मना ततो नातिदूरं गिरिशिखरस्रवज्जलधारा-शत-सम्पूरितोदरं मद-मुखरित-मयूर-कुटुम्बाधिष्ठिततटतलं मधुरगुञ्जनपर-भ्रमद्-भ्रमरनिकर-भज्यमानाम्भोजकल्प-कुसुमकदम्बकम्परितः समुड्डीयमान-वन्यविहग-निवह-विहित-कलरव-रस-रमणीयं शुक-पिक-काक-कपोत-वाशित[5]-विरचित-नव-वल्लरी - शोभा-भर[6]-भारभृतमारण्य-

---

१. 'पापड़' इति प्रसिद्धैः । २. सहभोजनम् । समाना जग्धिः= सग्धिः । ३. बुभुक्षाम् । अशनस्य इच्छा अशनाया ताम् । ४. उपवन-प्रान्तचरम् । वनान्ते प्रेङ्खतीति इखि (गतौ) धातोः कर्त्तरि ल्युट् 'इजादेः सनुमः' इति णत्वम् । ५. पक्षिरुतम् । ६. अत्यन्तम् ।

कालिकुलाकुलित-कूल-तरुच्छविभारं तोयाधारं समया समुपेत्य स्नान-पूर्विकाः क्रियाः सम्पाद्य काशीत एव समानीतैर्भोज्य-पदार्थैर्विहिताहारो मुहूर्त्तञ्च विश्रम्याहं कतिचन यात्रिभि-र्भ्रातृभिः सह भार्यां भारवाहिनश्च पुरस्कृत्य ततः प्रचलितः।

## भैरवघाटी–भयङ्करता

**66.** अथ भयङ्करावर्त्तशत – गण्डशैलान्तर्जलसमुच्छ्वलन-सिंहनादसहोदर–भयङ्कर-ध्वनि-प्रतिध्वनि–वधरीकृत-क्रोशद्वया-र्धवर्त्यध्वनीन-निवहेऽमुष्मिन् मार्गे प्रचलत्यपि सुरसरिदम्भः-शीतलतर-सीकर-निकरवाहिनि मातरिश्वनि[१] सर्वथाऽपरिचित-परमोच्चावचगिरि-भूभाग-व्यवधान-भयङ्करे भृगुप्रचुरे[२] प्रदेशे निरन्तर-सञ्चलन-श्रम-समुद्भूत-स्वेदजुषा वपुषा परिशुष्केणा-धरेण च नितान्तं निरवधिकक्लेशमनुभवन्तः सर्वे क्वचिद् रसा-तलमिव व्रजन्तः, क्वचिद् गगनतलमिव स्पृशन्तः, क्षणं प्रवलान् प्रपातान् अखर्वान् गर्तांश्च परित्यजन्तः, क्षणमुपत्यका अधित्यका-श्च समुल्लङ्घयन्तः क्लान्ति-ग्लपिताननास्त्वरितश्वासप्रश्वासाः स्थाने स्थाने विश्रम्य, स्थूलं स्थूलं कवोष्णं श्वसन्तो भूयो भूयश्च वारिबिन्दुभिर्गलनलिकामार्द्रयन्तः, प्रतिपदञ्च पाषाणपात-भीतितः सुतरामात्मानं यममुखमभिनिर्विशमानमिव मन्य-माना राम ! राम !! शिव ! शिवेत्यसकृत् कीर्त्तयन्तो मन्थ-रितावयवा वयं होरात्रयेण कदध्वानममुं कालदंष्ट्राजालमिव व्यतिक्रम्योपरि गिरिशिखरस्य भैरवस्थलमागच्छाम।

## पत्न्या मूर्च्छना

**67.** परं हन्त हन्त ! पर्वतपरिक्रमण-शिखरि-शिखर-समा-

---

१. पवने। २. सानुबहुले प्रपातबहुले वा। 'भृगुः सानौ जमदग्नि-प्रपातयोः' इति हैमः।

रोहण–गभीर-गर्त्त-समुल्लङ्घन-परिश्रमाधिक्येन घर्मराजि[1]समुद्भेद-क्लिष्ट-कपोलमूला, विमुक्तविसंस्थुलैर्बालजालैः समाकीर्णभालभागा, प्रत्यूषविधुमण्डल-पाण्डुर-परिक्षामवदना, सुतरां दुर्बलतरा, नितरां क्षीण-क्षीणा, अतितरां मृदुला, बहुतर-वेपथुचुम्बितावयवा, नलिनीव तनीयसी मदीया प्रेयसी मार्गश्रमातिवेलता[2]मसहमाना चैतन्यं परित्यजन्तीव लोचने मनाङ् मीलयन्ती मूर्च्छाभिभूता भूता। ततोऽञ्जसा नीचैर्निपतन्तीं तामहं सहसा प्रसारितबाहुयुगलो धारितवान्। तस्या अनया दशया त्वनर्थशतमाशङ्क्य धमद्धमद्धमनीधावमान-शोणितस्य मम तदानीमपच्यन्त इवाङ्गानि, अनश्यन्तेव सर्वेन्द्रियाणि, अभिद्यन्तेव समानि मर्माणि, अच्छिद्यन्तेव निखिलानि देहबन्धनानि, अकुप्यन्तेव विश्वानि रोमाणि, निरस्त्रियन्तेव प्राणाः, आक्रीडचन्तेव वेदनाः, अलुप्यन्तेव च चेतनाः। तेन च पुटपाक इवान्तरैव दन्दह्यमानदेहोऽहं गलनलिकामवरुन्धतः श्वासान् धिक्कुर्वन्निव बाष्पायमाणनयनयुगलः स्वचेलोपान्तेन व्यजनक्रियामनुतिष्ठन् जलकणैश्च शुष्कप्रायां तत्कण्ठनलिकां कथमपि आर्द्रतामानयन् हा दयिते ! हा पतिजीविते ! क्व गतोऽद्य तव मय्यसाधारणोऽनुरागः ? कुत इदन्ते महदौदासीन्यम् ? आदाधेहि[3] मय्यवधानं, नो तन्ताहि[4] हृद्रुजां वितानं, मा सम्पादय नौ व्यवधानं, त्वमेवासि मे जीवनमिव जीवनोपधानं सर्वस्वनिधानञ्च। त्वत्कृते यानि यानि कष्टान्यनुभूतानि तेषां त्वमेव प्रमाणम्। स्तनप्रत्यासत्या किमु ते हृदयेनापि निर्दयेनातिकठिनेनाभूयत ? वस्तुतो

---

१. घर्मराजिः=स्वेदरेखा, तस्याः समुद्भेदेन=उद्गमेन क्लिष्टम्=जर्जरितं कपोलमूलं यस्याः सा। २. अधिकताम्। ३. पौनःपुन्येन आधेहि। ४. पौनःपुन्येन विस्तारय।

दम्भोलिघटिता[1] हि त्वद्वक्षःस्थली। किं न प्रयच्छसि प्रति-वचनम्? अलमलमाभीलवहुलेन[2] नितरामनुचितेनानेन परि-हासप्रसङ्गेन। विलोपयतितरां तवेयं मूर्च्छा यात्राविलासम्, अभिमुखयति परमं वेदनाविनोदम्, सञ्चारयति नितरामनु-तपनम्, आकारयति दृढं शोकसन्तानम्, अङ्गीकारयति शान्ति-कार्पण्यम्, लम्भयति च ते दुःस्थितिः परिजनोपालम्भम्। उत्तिष्ठ-उत्तिष्ठ, नूनं विपिनायिष्यन्ते रम्याणि हर्म्याणि त्वां विना, यमा-यिष्यन्ते च प्रिया अपि बान्धवास्त्वामन्तरा। हा किं कृतं दुर्ललि-तेन दैवदुर्विलसितेन? हा कदा किम्परिधृतम्मया विनाऽवधान-म्पापपरिधानम्? हा विसदृशफलोन्मुखः खलु गुरूणामाशिषां समूहः, दुष्परिणामा भाग्यपरिणतिः, अनतिक्रमणीया हि काल-गतिः, अपरिहेया च कर्मविकृतिः। अये हृदयप्रिये! सुमधुरा-धरसुधारसं समुल्लासय, त्वयि विनिहित-जीवनमविलासमिह मृतमिव दासमुज्जीवय। यत एकमेव नौ जीवनं द्विधा स्थिता हि शरीरवल्लरीत्यसकृद् विलपन्तं मां विलोक्य निश्चेतनां ताञ्च लोकं लोकं पर्यवस्थापयितुं[3] समवेतैः सहानुभूतिं सन्दिदर्शयि-षद्भि[4]रनेकैर्यात्रिबन्धुभिरपि न पारितं निरोद्धुं नयनाम्बु-बिन्दून्। केयमिति, कथमिति, कुत इति, किमिति, किमजनि किमजनीति क्रियासमभिहारेण जिज्ञासया वर्त्तुलीभूय सर्वथा-ऽसह्यः खल्वस्याः सन्तापः, परीक्षणीयोऽस्या हृदयोत्कम्पः। हंहो स्पन्दतेऽद्यत्वेऽस्या हृदयं, श्वसिति सुतरां साम्प्रतं, नैवापयाताः प्राणाः, समायान्ति च मन्दं मन्दं सुखश्वासाः। अरे! सञ्चारयतु

---

१. वज्रनिर्मिता। २. आभीलं=कष्टं बहुलं यस्मिन्, तेन। ३. परि+अव+स्था+णिच्+तुमुन्=पर्यवस्थापयितुम्। ४. दर्शयतेः (णिजन्ताद् दृशेः) सन्नन्ताद्ः।

सञ्चारयतु सद्यः समानीतेनानेन कदलीदलेनार्द्रवातान्,शिथिलयतु शिथिलयतु धम्मिल्लम्, अपनयतु अपनयतु परमम्पिनद्धम्पयोधरावरणम्, कलयतु कलयतु करस्खलितङ्काञ्चनवलयम्, क्षालयतु क्षालयतु स्वक्षियुगलम्, पाययतु पाययतु चमसेन[१]पीयूषधाराम्-इति साम्रेडं व्याहृतवत्सु सर्वेषु शनैः शनैः संवीजयन्, सुधाधाराम्पाययन्, लावण्यजुषी चक्षुषी च जलेनाभ्यषिञ्चन् प्रयत्नशतेन संज्ञां ग्राहयित्वा भगवते परमात्मने धन्यवादानर्पयन् सुखश्वासमजाग्रहमहम् । हंहो, नातिदवीयसि[२] तत्र प्रदेशे परितस्तां समुपविष्टानां तदाराधनतत्पराणां सर्वेषामस्माकं युगायितमेव तेन समयेन ।

एवं सर्वबन्धुजनप्रयत्नोच्छ्वसितजीवितां तां दयितां हिमहतां नलिनीमिव क्षीणक्षीणां मन्यमानोऽहं तस्मिन्नेव दिने विवशां स्त्रीस्वभावाद्विशेषविह्वलां हृदयवल्लभां तां नीत्वा पुरोगन्तुमनुचितमिति तत्रैवैकस्मिन् परमलघुनि तृणकुटीरे यत्र हि झञ्झावातोत्पातोत्तृणीकृत–गृहविवरप्रपतत्–तुहिनकणेभ्यो[३] वसनसंरक्षणमपि कठिनमासीत् तत्र कल्पितावासः सकष्टमतिष्ठम् ।

## रात्रिनिवासः

**68.** एवंविधे विधिव्याधिव्यतिकरे युगसहस्रायमाणं तमवशिष्टं दिवसं सजृम्भारम्भ[४]–सम्भाषणादिभिः समाप्य सायं तत्र यथामिलितम्भोज्यमुपभुज्य श्रमातिरेकेण निदिद्रासद्भ्या[५]-

---

१. "चम्मच" इति नाम्ना प्रसिद्धेन पात्रेण । २. नातिदूरे । ३. झञ्झावातोत्पातेन ( उड्डायितानि आच्छादनतृणानि यस्य ) यद् गृहं तस्य विवरात् प्रपतन्तः ये तुहिन—(हिम) कणास्तेभ्यः । ४. मुखविकासः, 'ऊबासी' इति हिन्द्यां प्रसिद्धः । ५. निद्रां ग्रहीतुमिच्छद्भ्याम् ।

मावाभ्यां कटशय्या[१]मधिशय्य गतार्धयामायां त्रियामायां स्वापानन्दः समचीयत। परेद्युः प्रातस्तुषारगिरि–तुङ्गशिखर-स्थलीषु समङ्कुरितेषु रविरश्मिजालाङ्कुरेषु समुत्सृज्य शयनं प्रवहति प्रालेयनभस्वति, परिसरति च शिशिरसम्पाते प्राभातिकं कर्म सम्पाद्य पयस्यां च निपीय गङ्गोत्तरीयदृश्यदिदृक्षया पुनरावां द्विगुणितोत्साहावबोभूयिष्वहि।

भैरवघाटीतः सार्धगव्यूतिद्वयमेव निगद्यते गङ्गोत्तरीयं स्थानम्। यद्यपि मरुत्तरयानस्यापि तत्र व्यवस्थाऽवर्त्तत परं पत्न्या अनुमत्या पदात्योरेवावयोस्तत्र गमनं निर्णीतम्। अतो भारवाहिनं पुरतो विधाय पत्नीद्वितीयोऽहं ततः पद्भ्यामेव प्राचलम्। अस्मान् वीक्ष्य कतिचन परेऽपि यात्रिणोऽस्माभिः सह तत्र गामुका[२] अभूवन्।

## गङ्गोत्तरीयमार्गरामणीयकम्

**69.** यद्यपि प्रस्थानसमये विकम्पितनीपपादपवनः पवनः शरीरे रोमाञ्चमुदञ्चयति स्म, पृथुलं वेपथुम्प्रथयति स्म, दन्तान् मुखरयति स्म, अधरम्प्रस्फुरयति स्म, सीत्कारञ्च तानयति स्म[३], तथापि पदशतमात्रमिव गत्वा प्रकृतिसौन्दर्य-दर्शन-समाहित-हृद्भिः प्रचलद्भिरस्माभिरनुभूतं यन्न वयं हिमगङ्गापरिसरे परिचलामः। सत्यं हि न जाने तच्छीतं कुत्र गतं कुतो वा विलीनम्। तत्र तु सचेतनाः पुरुषा इव निश्चेतना वन्यशाखिनोऽपि सततं वातेरितशाखाकरैः[४] सानुरोधं समाहूय समाहूय यात्रिवन्धुभ्यः खगकुल-कलकल-मिषेण स्वागतम्प्रयच्छन्त इव,अपसृत-पाण्डुपत्रैः[५]

---

१. तृणास्तरणम्। २. गन्तारः। 'लषपत०' इत्यादिना उकञ्। ३. तनु विस्तारे धातोर्णिचि। ४. पवनान्दोलितैः शाखाहस्तैः ५. अधःपतितैः पाण्डुवर्णदलैः।

रासनं समर्पयन्त इव, चातिथ्यनिष्णा[1] एव व्यराजन्त। हन्त, कृष्णसारमृगशृङ्गभङ्गुरासु[2] शाखासु स्थितानां कुसुमशस्त्र[3]-शास्त्रकारिका इव सारिकाकल्पानां विहङ्गाङ्गनानां मधुरा गिरः कमप्यमन्दं मोदं विस्तारयन्त्यः समवर्त्तन्त। अहो अनेक-पुष्पकास्तरव एकपुष्पका[4]भिमानिनं दशाननं समुपहसन्त इवा-शोभन्त। तत्र हि वनतरुकुसुमानां नासीत् कुत्रापि कुसुमत्वम्[5], नक्षत्रपथमिताऽपि नावर्त्तत काचन विशाखा[6] शाखिश्रेणिर्नव-वल्लरी च पुष्पवत्यपि[7] निर्दूषणा। तथा विविध-विपिन-मही-रुह-शाखामवलम्ब्य धवल-कुसुम-कोरकव्याजेन कुमुदबान्ध-वोऽपि वरवर्णिनी–वदन–विभा – भारमवलब्धुमिवायाचितवृत्ति विदधानः कृच्छ्रं तपस्तपस्यन्नवालोक्यत। किमन्यत्, सुविकसित-प्रसून–स्तबक-स्रवदमन्दमकरन्दं मन्दं मन्दं विकिरन्ती, यौवनो-न्मत्तसीमन्तिनीव सीत्कारं शिक्षयन्ती, अधरदलं व्रणयन्ती, रोमाञ्चसञ्चयमुदञ्चयन्ती पर्वतीया वात्याऽपि कमप्यमन्द-मानन्दं जनयन्ती सञ्चलनौत्सुक्यं प्रवर्धयति स्म। अतः क्षणं विविध–विकच–विटपिच्छायासु, क्षणं विस्तृतासु व्रततिविततिषु, क्षणं सघनच्छदन–समाच्छन्नेषु लतान्तरेषु, क्षणं समीरण-समी-

---

१. अतिथिसत्कारकुशलाः। अतिथ्यर्थमातिथ्यम्। 'अतिथेर्ञ्यः' इति ञ्य प्रत्ययः। निष्णान्तीति निष्णाः। 'आतश्चोपसर्गे' इति कः प्रत्ययः। 'निनदीभ्यां स्नातेः कौशले' इति षत्वम्। आतिथ्ये निष्णाः। २. कृष्णो वर्णः सारः=श्रेष्ठः, यस्य, तस्य मृगस्य शृङ्गवद् भङ्गुराः अतिवक्राः, तासु। ३ कुसुमशस्त्रः=कामः। ४. एतन्नामक रावण-विमानम्। ५. कुत्सितसुमत्वम्=कुपुष्पत्वम्। ६. विशाखा=शाखा-रहिता, विशाखाभिधनक्षत्रवती च। ७. पुष्पवती=कुसुमवती, अन्यत्र रजोवती।

रितदलेषु, शाद्वलेषु, क्षणं तरुवरापसृत–पल्लव–संस्तरणेषु प्रस्त-रेषु च स्थायं स्थायं क्वचित् परम–चपल–प्लवग–कुलकर-कम्पित–पुष्करस्पर्शि[१]– सरल[२]–साल[३]–सल्लकी[४]–सर्ज[५]–भूर्ज-शाखि–शिखारूढ-केकानुमेय-केकि–कदम्बेषु महीध्रेषु, क्वचिद् गुरुगैरिकासार[६]–समुल्लसत्–किसलयेषु काननेषु, क्वचिद् वृक्षाद् वृक्षान्तरं,शाखात: शाखान्तरं, स्तम्बात् स्तम्बान्तरं सचञ्चु-चापल्यं, सवलक्ष-पक्ष-कण्डूयनं, सगुञ्जारोदीरणं,सफरफरायमाण-निस्वनं समुड्डीयनपरेषु श्वेतपारावतेषु, क्वचित् वनप्रसून-मञ्जरी-जाल-निषण्ण-मधुर-मधुकर-निकरेषु, क्वचित् सघनमहीरुह-वर-पटली–ललिततल–लीनेषु कोल[७]-कदली[८]-कृष्णसार[९]-निकुर-म्बेषु, क्वचिद् वनविहरणपरायण-तरुण-हरिण-मिथुन-लास्य-विलासेषु समासज्यमानेक्षणोऽहं जायासहाय: सर्वै: सह मिथो विहित–विदग्धालाप: कयापि वेलया न जाने कियन्तं पन्थान-मतिक्रम्य माघवनं वनमिव परमपावनं शोभनञ्च गङ्गोत्तरीय-तीर्थपरिसरमुपेत्य प्रयाणविच्छेदमकार्षम् ।

## गङ्गोत्तरीयस्थलमुपेत्य पत्न्या: प्रसन्नता

**70.** तत्र नेत्रपथप्रथमप्रियातिथित्वमुपगते हि सुन्दरे पूत-स्थल-पुरन्दरे विस्तृत–सञ्चलन–जनित–वपुर्व्यथयाऽपि विपुलप्रमोद-पुलकितावयवया भार्यया भणितं– स्वामिन् ! साम्प्रतं सफल:

---

१. गगनचुम्बि । २. सरल:=अवक्रो वृक्षविशेषश्च । 'सरल: पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु' इति मेदिनी । ३. साल:=वरणवृक्ष: 'सालो वरण सर्जयो:' इति रभस: । ४. सल्लकी='साला' इत्याख्यो वन-वृक्ष: । ५. सर्ज:=शालतरु: । ६. आसार:=प्रसार: "आसार: स्यात् प्रसरणे वेगवृष्टौ सुहृद्बले" इति विश्व: । ७. कोल:=वराह: । ८. कदली=मृगविशेष: । ९. कृष्णसार: हरिण: ।

सम्पन्नः सकलः समागमनपरिश्रमः, जातं कृतार्थं मानवजन्म, निर्बाधा जाता गुरूणामाशीर्वादाः, प्रसादाभिमुखाः सर्वे बर्हिर्मुखाः[1], अवलोकितमद्यावलोकनीयम्, रमणीयतमानामपि रमणीयतमं प्रियतमानामपि प्रियतमं पावनतमानामपि पावनतमं स्थानमेत्याद्य नितरां धन्यतमावावाम्। मन्येऽत्र रम्ये प्रदेशे स्वर्गात् सकृदप्यागत्य नाकिनो न पुनर्वनीं माघवनीं सुस्मूर्षिष्यन्ते, न चान्येऽपि संसारिणः प्राणिनः स्वर्गाय पिस्पृहयिषिष्यन्ति। न हि कदाप्यपुण्यभाजां वपुर्भाजां भवति भाग्ये भूयस्तरां पुण्यपूर्णा विग्रहवतीयं शुभवेला। धन्या इमास्तीर्थ-सार्थ[2]-स्नान-सार्थीकृत-मुनिजन-निवासपावनीभूता गिरिगरिष्ठाः सकल-सुरासुर-सम्भावित-प्रतिष्ठाः परमरमणीयाः सुकृतस्य जन्म-निलया[3] देवभूमयः। अत्रैव पूर्वं वसिष्ठ-विश्वामित्र-शौनक-प्रभृतिभिर्महर्षिभिर्भूयांसि दारुणतपांसि समतापयिषत, अत्रैव यायजूकैर्विविधा यागा व्ययाजिषत[4], अनेनैव पथा भगवत्या भागीरथ्या भारतभुवमुपेत्य सगरसुता नाकलोकमनायिषत इति। एतदाकर्ण्य मयापि भणितं– पुण्यशीले सत्कुलमहिले ! सत्यं हि गङ्गोत्तरीयसदृशे पावनतमे हृद्ये निरवद्ये देशे समागमनं नाल्पस्य तपसः फलम्। यतोऽत्र काव्यानामेव दोषस्थितिः, छन्दसामेव यतिभङ्गः, योगानामेव व्याघातः, व्रतानामेव प्रदोषः, विभाकरस्यैव कन्यारोहणम्, नक्षत्राणामेव पुनर्वसुग्रहणम्, ज्योतिःशास्त्र एव पातस्पर्शः, साहित्यशास्त्र एव रसविरोधः, व्याकरणशास्त्र एव च वर्णलोपः। द्विजपक्षतिस्तिर्यक्षु न जनेषु, अम्बरमालिन्यश्च प्रावृषि न निवासिवपुषि। एवन्तदानीं सुधा-

---

१ देवाः। २ समूहः। ३ जन्मस्थानभूताः। ४ व्युपसृष्टाद् यजेर्लुङि।

मुचो वाचो वितन्वत्याः पाणिगृहीत्याः सुवचोभिर्वाचो व्यामिश्र-यन्नहमासन्नापराह्णेऽनेहसि तत्र यात्रिणामेव निवासाय सम्पा-दित-समुचित-विविध-सुविधानां गृहगोधिकाधिकानां[१] वासते-यानां[२] दारुखण्डचितकक्षाणामन्यतमे समासज्य सम्भारजातं जलानयनादिकार्यजातञ्च सम्पाद्य समादिश्य च तं प्रतिगन्तुं सहायायिनं भारवाहिनं तत्र स्वल्पं विश्रामगृह्णाम् ।

## वर्षावर्णनम्

71. किन्तु यावदहं गङ्गोपकूलं सिस्नासु[३]रजिगमिषिषं[४]-स्तावदेव शातक्रतव्यां[५] ककुभि[६] कालायस[७]- सवर्ण–स्रवन्मद-दिङ्मातङ्ग-गण्डमण्डलाभोग-भयानका नवाम्भोभार-भूमि-भूरि-विलम्बिघनघटासङ्घाताः समस्तं भूमण्डलं जलमयं विधा-तुमिव, दशापि दिशो मेघान्धतमसाऽञ्जसाऽऽच्छादयितुमिव, प्रलयपारावार- घोरराव-प्रतिस्पर्धि–गुरु–गर्जितैरुच्चैर्विधुर-धैर्य-घस्मरं[८] रणघोषं वितन्वन्त इव शतह्रदाशतचमत्कारातिशयैः प्रतिक्षणं चक्षूंषि समुत्पाटयन्त इव च स्तनयित्नवः पूगपीवर-पृषद्भिरवरीवृष्यन्त[९] । तेन स्वल्पेनैव कालेन तत्र अपारेण पयः-पूराकूपारेण सह समतन्तन्यन्त शीतसन्ततयः। अतनु-घन[१०]गहन-गर्जनरवैः सह कटकटायितुमारभन्त दन्ताः, ससीकर-शीतल-

---

१. मुससीबहुलानां, मुससी=छिपकलीति भाषायां प्रसिद्धः जन्तुः। २. वसतौ साधूनि वासतेयानि, तेषां वासतेयानाम् । ३. स्नातुमिच्छुः। ४. गन्तुमिच्छामकरवम् । ५. पूर्वस्याम् । ६. दिशि । ७. लोहः। ८. घस्मर=भक्षणपरम् । घस्लृ अदने ( भ्वा० प० प्र० ) धातोः 'सृघस्यदः क्मरच्' ( ३।२।१६० ) इति क्मरच् । ९. वृष् लङि यङि। १०. घनाः=मेघाः ।

प्रबल-समीर-रयासहैः[१] शाखि-शाखासमूहैः सह व्यशीर्यन्त देहबन्धाः । अविरलं हि विपुलचपलचञ्चला-चय-चमत्कारैः सह विचलितमिवाभवच्चित्तम्, अन्धकारितकान्तारेण घन[२]घनान्धकारेण सह समैधन्त विविधा रुजां भीतयः, जम्बु-स्थूल-जल-बिन्दुपातैः सह समवेविश्यन्त गङ्गाप्रवाहमधितुहिनं सञ्चरण-चारुविचाराश्चापि[३] । एवंविधे व्यतिकरे । सहसैव समवरुद्धतां यातो यातायातक्रमो यात्रिणाम् । चतुर्गुणरयेण समनरीनृत्यन्त निर्झराः, हेषारवैर्मन्दुरा इव गर्जनैः प्रतिध्वनिताः कन्दराः । शरीरं शोषयन्त इव समवरीवृध्यन्त सविस्फूर्जा[४] झञ्झावाताः । एवं होरार्धं पयांसि निपात्य शिथिलीभूतेऽपि जीमूते जातायामपि च विगतयौवनायामिव विगलत्पयोधरायां वियद्वीथिकायां शीतोत्कण्टकितगात्रेण मया तु न लब्धं कथमपि साफल्यं बहिर्निर्गमने । अतस्तत्रैव मध्येकक्षं पत्न्या सम्पादितं सुधास्वादु कवोष्णमोदनम्प्रेम्णोपभुज्य निपीय च हिमशीतलं जलं कोष्णीकृत्य यावत् कम्बलसंवृतः ससुखमस्वाप्सं तावत् तयापि भोजनतो निवृत्य विहितो विश्रामशयने प्रणयसञ्चयः ।

## सायङ्कालिकं दृश्यम्

**72.** होराद्वयं विश्रम्य सुविकसितारुणाधरकिसलयाया विलास-विलसिताया वनावनि-वनिताया उपरि प्रणयादिव पतन्त-मालोक्य प्रत्यक्षमनुरञ्जितं विवस्वन्तम्परमेर्ष्यावशादेव क्रोधारुणे

---

१. ससीकरशीतलप्रबलसमीरस्य रयः, तमसहन्त इति समीकर० समीररयासहाः, तैः । २. "घनः सान्द्रे दृढे दार्ढ्ये मुद्गरे विस्तरेऽम्बुदे । संघे मुस्ते घनं मध्येनृत्यवाद्यप्रभेदयोः" इति हेमचन्द्रः । ३. हिमशिलोपरि विचरणविचाराः [illegible] इत्यर्थः । ४. सविस्फूर्जाः—वज्रनिर्घोष-सहिताः ।

सम्भूते वारुणीदिङ्महिलामुखे समुत्थायावाम्पयस्यापानेन शीतं सातयितुं वद्धपरिकराविव प्रावारम्परिधाय[१] स्वल्पम्बहिर्भ्रमित्वा कदाचिदुल्लोल-कल्लोलास्फाल-विस्फारितां सुरस्रोतोवहां, कदाचिदभ्रंलिहानि हिमशिखराणि, कदाचिदामेखलं धावतो जलदान्, कदाचिदधिशैलेन्द्रमुच्चावचान् पर्वतमार्गान्, कदाचिच्च प्रलय-प्रचण्ड-प्रभञ्जन-कण्टकितगात्राणां यात्रिणां यातायातकौतूहलं विलोकयन्तौ प्रणम्य मन्दिरे भगवतीं विग्रहवतीं भागीरथीम्पुनरेत्य स्वकीयं कक्षं शैत्यदैत्यबलार्दितौ दृढदुर्गमिव विपुलं तूलसंस्तरशयनमाश्रित्य कथमपि निद्रा-दरिद्रीकृतहिमखेदौ शतयामामिव चतुर्यामां यामिनीमजीगमाव ।

## प्रातस्तुषारपातदर्शनम्

**73.** अथ जलमानेतुं रजतकलशमिव सकलशशिकलशं शिरसि निधाय पश्चिमपयोधिकूलमुपसर्पन्त्यां निशीथिनी-सीमन्तिनीमतल्लिकायाम्भक्तजनवितीर्ण–प्रातः–सन्ध्यार्घ्यजलाञ्जलिभिरिव मनाग् विमलतामुपगतवति वियति पाटच्चरसञ्चये इव प्रधावति तमःस्तोमे, ईषदुन्मिषितेऽथ तुषारप्रसारगर्भावास-जडीकृते इव मन्दप्रतापे पूषणि वनदेवीगीयमान–प्राभातिकस्तोत्रजाते इव वितन्यमाने विहगवृन्दैर्मधुरतरे कलकले सञ्चित्य साहसं सहसा शयनाद् वहिर्भूय वातायनत एवावलोकितमात्राभ्यां यद् रात्रौ तत्र परितः सञ्जाते नीहारपाते कैलासायितं सर्वशैलैः, पाण्डरपत्रायितम्पादपकदम्बकैः, दधीयितं स्रोतस्वती-कूलकर्दमैः, दुग्धायितङ्गङ्गाम्भसां फेनपटलैः, मुक्तामणिमालायितं वनलताभिः, शङ्खायितं वन्यबिल्वैः, घनसारवार[२] – कणायितञ्जाह्नवी-तट-

१. 'ओवर कोट' इत्याख्यम् उत्तरासङ्गवस्त्रं धृत्वा । २. वारः= समूहः । 'वार–सङ्घात–सञ्चयः' इत्यमरः ।

रेणुभिः, शरच्चन्द्रायितं विघर्षणगोल-पाषाण-सहस्रैः, कुन्दकुसुमायितङ्क्षाननसुमनःस्तवकैः, हंसायितङ्गङ्गाप्रवाहान्तःपतितैः प्रस्तरैः, सुरपतिगजायितञ्च गण्डशैलखण्डैः। किमन्यत्, तुषारपातेन सम्पूर्णेनैव गङ्गोत्तरीयस्थलाभोगेन रजतनगरायितमेव।

## प्राभातिकं गङ्गातटवर्णनम्

74. शोभनसौभाग्यात् तदानीं नासीत् प्रबलः प्रभञ्जनजवोत्पातः। अतः शैत्यदैत्येन नातिवितुन्नावावां शौचाचारादिकर्मभ्यो निवृत्य शरीरञ्च तैलेन स्निग्धीकृत्य स्नातुं गृहीतकम्बलौ क्वचित् तरलतरतरङ्ग-सङ्ग-सञ्जात-सहस्रावर्त्तनिकरां, क्वचिद् स्नान-क्रियागत–महात्मजन–चरणतल–पावनीकृत–तटपरिसरां, क्वचिद् भगवदाराधन-सम्पादन-सुखासनासीन-यात्रिजनप्रवरां, क्वचित् कम्बल-संवृत-सञ्चरण-श्रान्त-क्लान्तानुयात्रिक-कान्ताजनाधिष्ठित-कूलवालुकाप्रसरां कलिकल्मषकुलघस्मरां शीतातिशीतशम्बरां[1] सुरस्रोतोवहामुपेत्य लोचनगोचरीकृतमावाभ्यां यत् तत्र स्थाने स्थाने तपस्तप्तुमिव शीत-शात्रव-त्रास्यमाना मानवा नातिशुष्कानपि दारुखण्डान् कथमपि प्रज्वाल्य परितस्तांस्तिष्ठन्त आसन्। एषाङ्कतिचन शैत्योत्कण्टकितावयवा जलकणप्रोक्षणेनैवात्मानं धन्यममन्यन्त, कतिपये तु श्रद्धानिबद्धादरा रदनैर्भृशङ्कटु क्वणन्तोऽपि क्षिप्रं सकृज्जलमवगाह्य विस्मृतश्वासप्रश्वासाः स्वस्य पुनर्जन्मैवावगच्छन्तो झटिति कम्बलैः शरीरमाच्छाद्य प्रज्वलितं वह्निमात्मसात्कुर्वन्त इव तमभितो निषद्य निर्वृतिं लभन्ते स्म। निश्चप्रचं तत्र स्वल्पतमापि नावर्त्तत सुरस्रोतस्वती-पयसां सुखावगाहता। हन्त, तदानीमेव समारब्धः सहसा जगत्प्राणेनापि सता नभस्वता प्राणिनाम्प्रिय-



१. शम्बरम्=जलम्।

प्राणानपहर्तुमिव प्रभूतेन प्रभावेण स्वचमत्कारः। येन परितो दोधूयमानानाम्परःशतशाखिनाम्भयङ्करेण कर्णकुहरस्फोटकेन निःस्वनेन कवलीकृतमिवाभवत् तत् स्थलम्, सहैव च शैत्यातिशयिता शतगुणीभूता प्रावरीवृधीत्। किन्तु शीतप्रचुरेऽपीदृशे समये दम्भोलि[1]स्पर्श-कर्कश-तुहिन-पवन-रय-प्रस्फुरित-दशनच्छदन[2]-रदनदारुणे तस्मिन् स्थले दूरदूरं न्यक्काराभिमानभारानभिभूत-चित्तवृत्तयः, विघटित-कलिकाल-विलसित-सकलदुर्गतयः, समर्जित-सज्जन-मनोरञ्जन-गुणसंहतयः, अतुलतीव्रतेजःप्रताप-कलाप-पवित्रीकृतपर्वतभूमयः प्रवरमुनयः, पांसुपटलमिव प्रासाद-विलासं, तृणनिकरमिव स्त्रैणं[3], निधनमिव धनं, रोगानिव भोगान्, पापोपचयमिव वैभवसञ्चयं मन्वाना महात्मानस्तथा कतिचन मलमल्लकमात्र[4]वसनाः, परे काषायवसनाः, अन्ये रुद्राक्षमालाञ्चितगलप्रदेशाः, अपरे पूगस्थूल-तुलसी–मालामणि–मण्डितवक्षसः, कतिपये कलित–ललित–विविध-तिलका जरत्तापसाः कुत्रचित् श्वेतशिलातलङ् कुहचित् कुशासनम्, अन्यत्र अजिनासनम्परत्र कम्बलासनम्, क्वचिद् व्याघ्रासनञ्चाधिष्ठाय परित्यक्तान्यमनोव्यापारा दिव्यभव्याकारा ध्यानैकतानचित्ता इभा[5] इव तुन्दिभा[6] हठाद् यात्रिणाम्मनः समाकर्षन्ति स्म। एकत्र तु ध्यानामोदवशीकृत इव निश्चेष्टो गृहीत-योगासन इव सरलसमुन्नतकायः कोऽपि कौपीनवसनस्त्रुटितदशनः प्रवृद्धतापसः समुपविष्ट आसीत्, यमभितस्तिष्ठन्तः कतिचनाभिषेकार्द्रकपिश-कुटिल-जटा-कलापा-युवानो

---

१. वज्रम्। २. ओष्ठम्। ३. स्त्रीणां समूहम्। ४. कौपीनमात्रं। 'आच्छादनं संपिधानं कौपीनं मलमल्लकम्' इति वैजयन्ती। ५. गजाः। ६. स्थूलोदराः। तुन्दिभा इत्यत्र 'तुन्दिवलिवटेर्भः' इत्यनेन भः।

महात्मानोऽपि तमनुकुर्वन्ति स्म। निःसन्देहमिमे दिव्यदर्शनापध्वस्त-समस्त-पापपरम्परा उपहसन्त्येव स्नानपानापनीत-दुरित-तरङ्गां गङ्गाम्। अत्रैव अनेके मुण्डिनो मौनिनः काषायिणो ब्रह्मचारिणो महात्मानोऽपि दृष्टिपथमायाताः। येषां स्वल्पोऽपि परिच्छदः शौवस्तिकत्वं[1] न भजते स्म। तथाचान्ये कतिपये त्वभ्यम्भः[2] स्थित्वा मृदुकरतल-तालिका-कलितकलकला हरि-कीर्त्तनङ् कुर्वन्तस्तत्र विचित्रं प्राभातिकम्माङ्गलिकं दृश्यं वितन्वन्ति स्म।

## गङ्गार्चनम्

**55.** एवंविधं विचित्रं वातावरणं विलोक्य शीत-समुत्कण्टकित-शरीरावप्यावां समूर्जितोत्साहौ समवतारित-कम्बलाच्छादनौ यथा तथा यत् किञ्चित् स्नानकर्म सम्पाद्य परिधृतवसनौ दन्तान् कटकटायन्तौ हस्तौ पादौ च निष्प्राणतां लम्भयन्तौ गात्राण्यपि परकीयानीवानुभवन्तौ ज्वलज्ज्वालज्वलन-सेवनेन पुनरागतप्राणाविव भूत्वा गङ्गाम्भांसि भाजनेऽभिनवे गृहीत्वा श्रीभागीरथीमन्दिरमागच्छाव। तत्र च सन्ध्यावन्दनादिकीं निखिलां नैत्यिकीं क्रियां कृत्वा हंसपक्षवलक्ष–वसनवत्याः श्रीमत्या भागीरथ्या दर्शन-समर्चन-परिक्रमणादिकं तीर्थगुरूपदिष्टेन विधिना विधाय यथाशक्ति तच्च सुवर्ण-दुर्वर्ण[3]वसना-

---

१. शौवस्तिकत्वं=आगामिदिनस्थायित्वम्। श्वो भवाः शौवस्तिकाः। 'श्वसस्तुट् च' इति ठञि तुडागमः। 'ठस्येकः' इति ठस्येकः। 'द्वारादीनाञ्च' इति ऐजागमः। शौवस्तिकानां भावः शौवस्तिकत्वम्, तत्। 'तस्य भावस्त्वतलौ' इति त्वप्रत्ययः। "त्वान्तं क्लीबम्" इति लिङ्गानुशासनात् तदन्तस्य नपुंसकलिङ्गत्वम्। २. अभ्यम्भः=जलं प्रति। विभक्त्यर्थे अव्ययीभावः। ३. रजतम्।

दिभिः सत्कृत्य सप्रसादं सुप्रसन्नेन मनसा तैः प्रदत्तान्यर्व-खर्वपर-परार्धाशिषां वचांसि च शिरसा स्वीकृत्य यात्रायाः साफल्यमन्यमानोऽहम्पाणिगृहीत्या सह भूयो भूयो भगवतीम्प्रणम्य स्वकीयं निवासकक्षमेवागमम्। तत्र जलक्लिन्नानि वस्त्राणि नागदन्ते वितत्य झटिति सम्पादितेन नवौदनेन स्वल्पं सन्तर्प्यात्मानं भारवाहिनमाहूय गृहीताल्पविश्रामेण मया गोमुखाभिमुखं प्रास्थीयत।

## गोमुखाभिमुखप्रयाणम्

**76.** इदं हि गङ्गोत्तरीयस्थलतो गव्यूतिपञ्चकान्तरालवर्ति वरीवर्ति- इति निगद्यते। अस्माभिः सहान्येऽपि कतिपये यात्रिणस्तत्र यातारोऽभूवन्। यद्यपि तत्र नासीदतिमहान् विषमतर उच्चावचमार्गस्तथापि पथः सङ्कीर्णतातिमात्रता, तिर्यक्त्वप्रचुरता, जनशून्यता तथा पदे पदे पाषाणपातभीतिता तु दुर्गमतां जनयन्त्येवासीत्। गण्डशैलमयदुरवगाहनीयभूमयः प्रभञ्जनस्य प्रबलाः प्रवेगाश्चाप्यवश्यं प्रतिपलम्महान्तं विघ्नव्यूहमुत्पादयन्ति स्म। किन्तु निरवधिक-समधिक-सावधानतया प्रलम्बपङ्क्तिम्बध्वा प्रचलतस्तथा कुत्रचित् सांमुखीन-तुङ्गतर-शिखरिश्रृङ्गरङ्गत्कुरङ्गायमाणेषु[1] वन्यपशुषु, कुहचन नतोन्नत-तल-प्रवहन्निर्झर-धाराऽऽरान्नरीनृत्यमान-मोमुद्यमान-विविध-विहग - निवहेषु, क्वचित् पिक-शुक-केकि-कलविङ्ककल्पानाम्पक्षिणां कूजन-नर्त्तन-कण्डूयनादिषु च विश्रान्तविलोचनानस्मान् परमविचार-चातुरीधुरीणो मार्गदर्शको भारवाहकोऽङ्गुल्या किमपि सङ्केतयन्नभाणीत्—

---

१. संमुखगतोच्चतरगिरिशिखरभमद्धरिणसदृशेषु।

## हिमकन्दरासु मुनयः

**77.** अत्र हि परतो हिमसरितो[1] गिरिकन्दरासु शैलशिखरेषु च दूरं दूरं यत्र यत्र वह्न्याश्रयो धूमो गगनमुड्डीयमानः किञ्चित् किञ्चिद् दृश्यते तत्र सर्वत्र घनघोरगर्जन-दुर्जयान्धकार-निबिड-तरसार-सौदामिनी-चमत्कारान् तिरस्कुर्वन्तः, समदसमुद्वेल्लदुल्लोल-तरङ्ग-कोलाहल-बहुल-नदीप्रवाहानगणयन्तः, श्रीमद्-भगवद्ध्यान-धारणा - समाध्यसाधारण - योगसाधन-समर्जित-सिद्धिसाराः, संसारापारपारावार-कर्णधाराश्च्युताशनाया[2]-स्तुहिनकणैरुदन्यां[3] प्रशमयन्तः सिद्धमहात्मानो ब्रह्म साक्षात् कुर्वन्तस्तपस्यन्ति[4]। येषां हिमशैलशिखराण्येव भवनानि, तुहिन-संहतिरेव शय्या, यदा कदा यथा तथा प्राप्तानि कन्दमूलादीन्येव भोज्यवस्तूनि, स्रवत्तुषारस्रोत एव पानीयम्, विशदं निर्मक्षिक-मरण्यमेवेदं विहरणस्थलञ्च। न कदाप्येताननतितनुपुण्यभाजो द्रष्टुम्पारयन्ति प्राणिनः। लक्षाधिकेषु कदाचित् कश्चिदेव सुभग-भागधेयः सुगृहीताभिधेयः साक्षात्कृत्यैतान् कृतार्थो भवति। कस्मात् कालात् कुत एत्य कथमेत्य कदाचैत्य तत्रैते तपांसि तप्तुमारभन्तेति न कोऽपि वेत्ति। वाङ्मनसयोरप्यगोचरः खल्वेषां तपसां प्रभावः। श्रूयते, अयमस्ति तपःसिद्धिप्रदेशः। अत्रैव पूर्वं नारद-वसिष्ठ-विश्वामित्रात्रिप्रभृतयो महर्षयो भूयांसि तपांसि तप्त्वा सिद्धिं लेभिरे। साम्प्रतमपि यक्ष-गन्धर्व-गुह्यकादिदेवयोनयोऽत्र भ्रमन्ति। अत्रैव बद्धसिद्धासना निरुद्धश्वास-

---

१. ग्लेसियर-इति नाम्ना प्रसिद्धाः हिमप्रवाहाः। २. अपगत-बुभुक्षाः। अशनस्येच्छा अशनाया, च्युता अशनाया येषां ते तथोक्ताः। अत्र "सुपः" इति क्यच। ३. पिपासाम्। उदकस्य इच्छा उदन्या ताम्। ४. तपश्चरन्ति।

निस्वना योगिजना ब्रह्मविलीना विद्यन्ते । ये हि क्षणेनैव कर्त्तुमकर्त्तुमन्यथापि कर्तुं प्रभवो जगतीति गदतीतिवृत्तविज्जनोऽत्रत्यः । नैतान् प्रतुदति चिखादिषा[1], न पीडयति पिपासा, न तरलयति विविदिषा[2], न नोदयति जिगमिषा च । अतनुतपःप्रभावान्नेमान् मनसाऽपि वन्यपशवो जिघत्सन्ति[3] । न तुहिनपातास्तित्रासयिषन्ति[4], नाधयो व्याधयो वा तुतुत्सन्ति[5], न प्रभञ्जनप्रवेगाश्चिच्छित्सन्ति[6], नोल्कापाताः पिस्पृक्षन्ति[7], न शरीरधर्मा एव जिघांसन्ति[8], नैवैतान् योगिराजान् केऽपि कदाप्युपद्रवाश्चिक्लेशयिषन्तीति सर्वथा स्वाधीनसिद्धय महर्द्धयो महर्षयोऽवश्यं सर्वैः स्थानस्यागम्यत्वादित एव नमस्करणीयाः । सम्यक् श्रुत्वैतत् समुदितश्रद्धाभावा अपगतदुरितप्रभावाः सत्त्वस्वभावा वयं मनसैव भूयो भूयस्तान् प्रणतवन्तः ।

## मध्याह्ने पथि विश्रामः

**78.** अथ पुनः स्थाने स्थाने प्रचण्ड-चण्डमान-पवमान-जवनिवह-निपात्यमान-पाषाणखण्डेषु तथा तुङ्गगिरि-गर्भ-निर्भर-भ्रमद्-भागीरथी-नीरझङ्कारभार–प्रतिध्वनिताध्वनीनकर्णकुहरेषु भीतिशतसम्भृतेषु पथिष्वपि लोकं लोकमलौकिकम्प्रकृत्यालोकं बृहदानन्द-सन्दोह-सङ्कुल - जीवन - मन्दाकिनी - मेदुरवतां[9] सोत्साहम्पुरः प्रसर्पतामस्माकं दवीयस्तया[10]ऽध्वनोऽर्धे पथि एव

---

१. खादितुमिच्छा चिखादिषा । २. वेत्तुमिच्छा विविदिषा । ३. अत्तुमिच्छन्तीति जिघत्सन्ति । ४. त्रासयितुमिच्छन्तीति तित्रासयिषन्ति । ५. तोत्तुमिच्छन्ति इति तुतुत्सन्ति । ६. छेत्तुमिच्छन्तीति चिच्छित्सन्ति । ७. स्प्रष्टुमिच्छन्ति इति पिस्पृक्षन्ति । ८. हन्तुमिच्छन्तीति जिघांसन्ति । ९. मेदुरवतां=सान्द्राणाम् । ञिमिदा स्नेहने धातोः 'भञ्जभास' इति सूत्रेण घुरच । १०. अतिदूरतया । अत्र ईयसुन् प्रत्ययः ।

सञ्जातो मध्याह्नः। अतो विश्व-मुकुटमणिमिवाम्बरमणिमम्बर-मध्यमध्यासीनं दृष्ट्वा परमश्रान्तया क्लान्तया मम कान्तया कमनीयतया भणितम्—हंहो, कमलिनीकुलवल्लभोऽप्ययं वयमिव प्रभातवेलातः परिश्रमन्निदानीमम्बरमध्यमध्यास्य वियति सुरदीर्घिकाकूलमुपगम्य विश्रान्तिशातमनुभवतीव भाति माध्याह्निकाह्निकमनुष्ठातुम्। अतः समुचितभोजनादिकमाह्निक-मह्नाय[1] निष्पादयितुमस्माकमपि स्वल्पमिहावस्थानं कुत्रापि साम्प्रतं साम्प्रतमेवेति समजन[2]-मनोऽनुकूलम्मधुरवदनाया मृदु-वदनं सर्वैरेवाभिनन्दितम्। अत एकत्र नेदीयसि[3] तुहिनतोय-स्रोतसि हस्तौ पादौ प्रक्षाल्य सहैवानीतं भृशमधरीकृतमधु-माधुर्यम्भोज्यजातं कवलयन्,पीयूषादपि सुस्वादु तदुदकमास्वादयन् तत्र कमप्यपूर्वानन्दथु-सन्दोहातिरेकमनुभवंश्च जाताह्लादः सध्रीचीं[4] निगदितवानहम्— पुण्यभृते दयिते ! स्थान एवाभि-निविष्टाऽऽसीः, समुचिते तीर्थं एव जातस्पृहाऽऽसीः, दर्शनीये दृश्य एव सञ्जाताग्रहाऽऽसीः, परमपावनस्थल एव कृताभि-लाषाऽऽसीः, निश्चप्रचम्प्राप्तमावाभ्यामिह जनिसाफल्यम्, सम-वाप्तं सुभगसौभाग्यम्, अनुभूतम्प्रभूततमम्पूर्वपुण्यफलम्, सम-धिगताश्चापरिमाणाः परिश्रमपरिणामाः। प्रयत्नसहस्रलभ्य-मतिदुष्प्रापं खल्वीदृशं तीर्थस्थलदर्शनम्। जीवितफलं किल नव-नववनावन्यवलोकनमेव। इदं स्वर्गीयं दृश्यं दृष्ट्वा को वा न धन्यम्मम्मनिष्यते जनो जनुरात्मनः। सत्यं हि सुरपुरादप्य-धिकतरं निर्वृतिस्थानमिदम्। एवं सक्षणं कतिचन सुक्षणांस्तत्र

---

१. झटिति। २. समस्तजन। ३. समीपवर्तिनि। ४. सहचरीम्। भार्यामित्यर्थः। सहाञ्चतीति सध्रीची।

विस्रम्भालापैर्गमयित्वा सम्भृत्य च द्विगुणमुत्साहम्पुनरपि पुरः प्रचलितुम्प्रवृत्तावावां सर्वैः सह ।

## पथि गङ्गाप्रवाहः

79. अत्र समवर्त्तत समतलम्मेदिनीतलम् । अतोऽत्रास्माभिः सहैव समेषां कल्मषकलुषतां क्षालयन्तीव, दुरितधोरणीं तर्जयन्तीव, पुण्यमहोत्सवं ख्यापयन्तीव, तरलतरङ्गकरानूर्ध्वीकृत्य भृशं नृत्यन्तीव, भक्तजनगमनमङ्गलदुन्दुभिध्वनिं वितन्वतीव, आवर्त्तसन्तानशालिनी त्वरितधाराप्रसारा, क्वचिद् भाद्रपदकलेव घनपीनपयोधरा, क्वचित् प्रियपत्नीव प्रसारित–कल्लोलकर-कृतालिङ्गनोत्साहा, क्वचिन्मदोन्मत्तकामिनीव स्खलद्गतिका, क्वचित् प्राभातिकश्रीरिव प्रतिपलमेधमानशुभवेला, क्वचिच्छन्दोभ्राजितिरिव जलोद्धत[1]गतिमती, क्वचिन्मानकुपितमहिलेव कृतमुखभङ्गा श्रीमती गङ्गा कामप्यमन्दां मुदं वर्धयन्ती पुरो गच्छन्त्यासीत् ।

## मार्गे झञ्झोत्पाताः

80. एवं सामोदं पुरः प्रसर्पत्सु सर्वेषु होरार्धमात्रेणैव सहसा गगनाङ्गने निरवद्यवाद्यघोषा इव रस[2]– मेदुरा परमपृथुला वारिदा मृदु-मधुर-सान्द्र-मन्द्र-घोषानतिवितन्वन्तो नैशमिवान्धतमसं सर्वत्र समजीजनन्[3] । कुतुकतरलितास्तरुण्य इव सौदामिन्यश्च भृशमनरीनृतुः । हन्त, मुक्तावृष्टिरिव प्रसूनवृष्टिरिव कर्पूरवृष्टिरिव च परितो वारिवृष्टिरप्यस्माकं साहसम् उत्साहं धैर्यं शौर्यञ्च परीक्षितुमिव सर्वान् क्लेदयन्ती क्रमशोऽवरीवृध्यत। स्वल्पेनैव समयेन च नितान्तं द्विगुणीभूताः सरित्पति-सम्भूत-

१. नदीपक्षे जलैरुद्धतगतिमती । अन्यत्र एतन्नामकं छन्दः, तद्वती । २. रससान्द्राः । ३. जनेणीच लुङि ।

प्रखर-रव-गर्व-चर्विणः स्तनयित्नुनिर्घोषा अपि त्वरितधारा-प्रवाहि-दिव्यधुनी-वीचि-वाचालीकृतप्रदेशतया गिरिगह्वर-प्रचुरतया च सहस्रधाऽऽत्मानं कल्पयन्तोऽसह्यतां याताः । सर्वतः उपरि बलाहकव्राताः, अधः सरित्प्रपाताः, परितश्च सोत्पाता झञ्झावाताः परमं भयावहं समयमुपस्थापितवन्तः । प्रलयकालायितं दृश्यमिदं विलोक्य भारवाहकेन भीतभीतेन समभिहितम्-राम राम !! वयं सर्वे साम्प्रतमप्रतीकारे विपत्पारावारे पतिताः स्म । झञ्झावातेन प्रतिपलं प्रतिपदञ्चेह पतयालूना[1]म्पाषाणानाम्पातभीतिः समेधमाना जाता । प्रतिश्यायनिपाते[2] प्रारब्धे तु न जाने किम्वोभविष्यति, रोदितुमपि नात्र कश्चन समायास्यतीति नीचैरात्मरक्षार्थं कुरङ्गप्लुतैः सर्वैर्नातिदूरवर्त्तिनि स्रोतस्विनीतटे[3] कृतावासस्य नैकटिकस्य[4] सिद्धसाधोराश्रमः समाश्रयणीयः । न तत्र गतं कमपि कोऽपि व्याधिः पीडयति, नाधिर्विनाशयति, न वृष्टिरार्द्रयति, न च पवनः प्रकम्पयतीति सममनित[5]-मतमिदमिह पृथु-प्रथितमनुभूतञ्चास्माभिरपि भूयशः— इति ।

## सिद्धसाधोराश्रमः

**81**. श्रुत्वैतद् वयं जलनिधौ निमज्जन्तो जनाः काष्ठफलकमिव, तिरोधातुं कृतत्वरा दीपशिखाः स्नेहसेचनमिव, यमसदन-

---

१. पतनशीलानाम् । पत गतौ ( चु० उ० से० ) धातोः 'स्पृहि गृहि पति' इत्यादिना आलुच् । २. तुषारपाते । ३. स्रोतांसि सन्त्यस्याम्, मतुप्=स्रोतस्वती । किन्तु 'अस्माया०' इत्यनेन विनौ स्रोतस्विनी इत्यपि रूपम् । ४. समीपवर्तिनः । निकटे वसतीति नैकटिकः । 'निकटे वसति' इति ठक् । ५. 'बुद्धं बुधितं मनितं विदितम्' इत्यमरः । सर्वैः मनितम् ।

मभिगन्तुम्बद्धपरिकराः प्राणिनः सुधाधारामिव तदुपदिष्टमुपायमुपलभ्य मार्गस्य सङ्कीर्णतया वटी[1]पिनद्धा इव पङ्‌क्तिनियमिता अपि अहमहमिकया पुरः प्रयातुम्प्रवृत्ताः। नातिदवीयसाऽनेहसा च भीतिमथनं सिद्धायतनं प्रविश्य काचं याचमानैः काञ्चनमिव, बिल्वतरुमर्थयमानैर्मन्दारमिव, शुष्केन्धनमनुधावमानैर्हरिचन्दनमिव, नीवारमुष्टिम्मृगयमाणैर्धान्यराशिमिव, कामपि धेनुं कामयमानैः कामधेनुमिव विशीर्यमाणहृदयैः कम्पमानकायैर्भज्यमानवचनैः कटकटायमानदन्तैर्दीर्घाध्वलङ्घनगुरुजडजङ्घैः सातिशय-विस्मय-विस्फारिताक्षैरस्माभिस्तत्र शीतभासां हिमद्युतिरिव, ज्योतिषां भास्वानिव, यादसां कूर्मराडिव, छन्दसां सामागम इव, सरसां मानससर इव, विहायसां[2] वैनतेय इव, पुरोधसां वसिष्ठ इव, विद्याजुषां धिषण इव, तपोजुषां भूषणभूतो न्याय-व्याकरण-साहित्यादिग्रन्थेषु सुप्रसिद्धायाः 'गङ्गायाङ्घोषः' इति लक्षणाशक्तिसमुदाहृतेरनुकूलं सुरसरिदुपकूलं विहितावासो जराजीर्णशरीरस्तपोवीरः पचेलिम इवास्मत्पूर्वजनि-जनित-पुण्यसञ्चयः कश्चन नातिकृपणवर्णोऽतिशयितसुरगुरुप्रभावो निरतिशयशान्तिसंवर्धनो गोवर्धनो मुनिराजो लोचनगोचरीकृतः। निःसन्देहमसौ विधिरिव वेदपरायणः, विष्णुरिव पद्मासनप्रियः[3], शिव इव सत्याचरणसन्तुष्टः, द्विजराज इव बुधाभिजनः, साक्षादवतार इव धर्मस्य, आधार इव शास्त्रजातस्य, आश्रय इव श्रोत्रियकर्मसमूहस्य, सुखनिवास इव निलिम्पवाचः, सुरगुरुरिव च वाचस्पत्यं वितन्वान आसीत्।

---

१. वटी=रज्जुः। २. खगानाम्। विजहाति भुवमिति विहायस्, तेषाम्। ३. मुनिपक्षे पद्मासनं प्रियं यस्य सः तथोक्तः। विष्णुपक्षे च पद्मायाः=लक्ष्म्याः आसनं=पीठं यस्य सः।

क्रिमन्यत्, परोपकारप्रवणोऽप्यात्मचिन्तनलीनः, संन्यासकृतादरोऽप्यनन्तश्रीविभूषितः, कृष्णचरितानुरक्तोऽपि सदाचारनिरतः, ब्रह्मभक्तोऽपि[1] ब्रह्मवित्तापहारी[2], मण्डलितद्विजोऽपि[3] द्विजशून्यः, जितेन्द्रियोऽपि रामोपासनतत्परः, सद्वेषोऽपि[4] दूरीकृतद्वेषः, अविद्याधरोऽपि[5] विद्याधरः, धृतमुनिवेषोऽपि सुराजितः[6], निष्कलत्रोऽपि सकलत्रः[7], समुन्नतात्मापि विनयाधिष्ठितश्चावर्तिष्ट। निःसन्देहमसौ सविशेष-तपस्तेजः-स्तोम-प्रकाशित-चतुराशावकाशः, समधिक-सम्भृत-सुकृत-समूह-सूर-दूरीकृत-दुरितान्धकारभारः, अतनुतप्ततपः-प्रभाव-प्रत्यापन्न-दिव्य-दृष्टिप्रसारः, प्रखरतरवैराग्यवैश्वानर-ज्वलज्ज्वाल-निर्दग्ध-सांसारिकभोगविलासाऽऽभोगः, यमनियमादियोगक्रियानुष्ठान-प्रतिष्ठिताशयः, निरन्तरवेदान्तवादचिन्तनदान्तहृदयः, सदयस्तेजोमयः, अचतुर्वदनः कमलासनः, अचतुर्भुजः श्रीजनार्दनः, अत्रिलोचनः खल्वीशानश्चेति कोऽप्यपूर्व एवानन्वयालङ्कृति-समुदाहृतिभूतः पुराणपुरुषोऽवर्त्तत। एतमभितश्च तत्र खगकुलानीव वन्यफलानि समास्वादयन्तः, मृगयूथानीव नवशाद्वलानि समनुशीलयन्तः कतिचन सन्तः समवर्त्तन्त। दृष्ट्वैवैनं वयं क्षितितलमिलन्मौलिमण्डलाः साष्टाङ्गमनंनमिष्महि[8]।

---

१. ब्राह्मणः भक्तः, ब्राह्मणस्य भक्तः। 'वेदास्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इत्यमरः। २. ब्रह्मवित्+तापहारी चेति पदच्छेदो विरोधपरिहारे। ३. द्विजाः=ब्राह्मणाः, दन्ताश्च। ४. स+द्वेषः, सद्+वेषः इति च पदच्छेदः। ५. विद्याधरजातिभिन्नोऽपि, विद्याहीनोऽपि। ६. सुरया=वारुण्या जितः, सुष्ठु राजितश्च। ७. निष्कलं=वृद्धजनं त्रायते, सकलं त्रायते चेति विरोधपरिहारः। ८. भूयो भूयो नमनमकुर्म। यङन्तान्नमधातोर्लुङि रूपम्।

## सिद्धसाधोः प्रभावः

82. अहो प्रभावो विदितसर्वधर्ममर्मणां समधिगतपरमात्मध्यानशर्मणां शुद्धात्मनां महात्मनाम् ? यतस्तत्राऽस्मत्प्रवेशेन सहैव सहसा बलाहकैः शान्तामन्द-जल-बिन्दु-वृष्टिसृष्टिभिरभूयत, चिरविलसन[१]-परिखेद-निश्चलाभिरिव चञ्चलाभिरपि नर्त्तित्तिरत्यज्यत, गगनमालया व्यपगत-गम्भीरतराडम्बर-विद्युत्परम्परया झटित्यजायत, पर्वत-प्रकम्पनपरेण प्रभञ्जनेनापि विरताखण्डचण्डिमारम्भसंरम्भ-कोलाहलेन तूष्णीमस्थीयत । किमधिकम्, आतिथेया अतिथीनामायासमपनिनीषव[२]स्तरवश्चापि तत्र मन्दपवनकम्पमान-शाखा-स्कन्ध-करैराह्वयन्तः इव, नीडनिलीयमान-विहगकुल-रवैः स्वागतगीतमुद्गिरन्तः इव, पवनान्दोलितशाखाशत-चारुचामरैर्वीजयन्तः इव, पृथ्वी-तल-पापात्यमानमृदुल-दलैरासनसम्पदं सम्पादयन्तः इव, दल-फल-भूरि-भारविनत-शिखरतया प्रणमन्तः इव च समागन्तुकानां शुभातिथ्यं वितन्वन्तस्तत्रावरीवृत्यन्त ।

## सिद्धसाधोर्दर्शनम्

83. अथ तत्र दूरादेव प्रत्यभिज्ञातानिव समुपागतानस्मान् करुणावरुणालयभूतया दृष्ट्या विलोक्य दरवलितकन्धरस्तपस्विपुरन्दरः किञ्चिद् विहस्य पूर्वोपस्थितं साधुसमाजं गङ्गोत्तरीयमेव स्थलं प्रविव्राजयिषुः[३] शनैरवादीत्— महात्मानः ! यद्यपि तुहिनगिरिगरिष्ठे त्वरितधार–सरित्स्रोतोवरिष्ठे पथि पदे पदे विपत्सर्पिण्यो विसर्पन्त्यो वर्त्तन्ते, किन्त्वलञ्चिन्तया । पुरुषार्थः प्रवर्त्तनीयः, भगवती भागीरथी सर्वं साधयिष्यति । अतो

---

१. स्फुरणम् । २. अपनेतुमिच्छवः । ३. प्रतिप्रेषयितुमिच्छुः प्र+व्रज्=ण्यन्तात् सनि उः ।

ह्यविलम्बम्प्रस्थातव्यं सर्वैरिति भगवदनुग्रहमिव सिद्धादेशं शिरसि धृत्वाऽष्टाङ्गश्लिष्टभूमिभिर्महात्मभिः 'जय गङ्गे जय गङ्गे' इत्यसकृदुच्चैरुच्चारयद्भिस्ततः प्राचल्यत। गतेषु च तेषु न्यगद्यत मुनिराजेन—"दिष्ट्या समे समये समायाताः। वः प्रतीक्षमाण एवासम्। भविताऽत्र महान् वज्रपात इव तुषार-पातस्त्वरितम्। स्वकीयमिव गृहमिदं वर्त्तनीयम्। सर्वजन-साधारणं नाम तपस्विस्थलम्।" इत्यसमाप्त एव तपस्विवचसि सहसैवामलकफलविशालैः पृषज्जालै[1]रारम्भि वर्षितुं समूसल-धाराङ्कादम्बिनीकदम्बकैः,[2] सहैव च विहायस्तलतः[3] स्थूलाति-स्थूलतूलकूटमिव तुहिन-कण-वर्षणमपि समारब्धम्। हिमपातेन च द्यौः कुसुमसञ्चयं वर्षुकेवा-[4] वालोक्यत। किन्तु किमतः परम्परमाश्चर्यं यन्न तत्र सिद्धाश्रमे स्वल्पोऽपि हिमपातोऽजायत। अतितरामुपजाताश्चर्या वयन्तु तदादेशान्नातिशीते पर्यन्ते वेशन्ते[5] निर्वर्तित-हस्तपादप्रक्षालन-प्रक्रियाः सुधास्वादूनि तद्वितीर्णानि कन्दमूलादीनि ससुखमुपभुज्य विहित-विश्रान्तिप्रचारा गृहीता-हाराः शीतलं शिलातलं निश्चिन्तमधितिष्ठन्तन्तमुभयतः समुपविष्टाः।

## प्रवचनम्

**84.** अथ भूतलनलिनासनस्यास्य महात्मनः प्रबलेन प्रतापेन, अनुपमेन प्रभावेण, भव्येन तेजसा, निस्तुलेन तपसा, विलक्षणेन

---

१. जलबिन्दुसमूहैः।  २. मेघमालाभिः।  ३. आकाशात्।
४. वर्षुकेत्यत्र सेचनार्थकवृषुधातोः 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' इत्युकञ्। 'वर्षुका' इति पदयोगे कुसुम-सञ्चयमित्यत्र 'न लोकाऽव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेधात् कर्मणि द्वितीया।
५. लघुसरोवरे।

त्वचसा, विचित्रेण ज्योतिषा, अद्भुतेन ओजसा च तस्य निखिल-वाङ्मय-पयःपयोधि-निर्मन्थनमन्दराचलायमानतां समस्ता-ध्यात्मज्ञान-गहन-काननानवरुद्ध - निर्भीकगति - कण्ठीरवताञ्च लोकं लोकन्तद्वदनारविन्द-निष्यन्दित-प्रवचन-पीयूष-पारावार-पृषत्प्राप्तिपरमोत्केन केनचनैकेन निवेदितम्—"स्वामिचरणाः! महामोहतमोमयेऽविरतनिरवधिक-दुःखद्वन्द्व-भ्रमिपरम्पराकलिते जन्म-जरामय-मरण-हर्षामर्षाधि-व्याधि-प्रभृत्यनर्थकोटि-कुटिले तापत्रितयदहनदग्धे षडूर्मिबृंहिते शत्रुषड्वर्गव्याधबध्यमान-प्राणिनिकायेऽस्मिन् संसारे पूर्णम्परिश्रम्यापि नक्तन्दिवम्परि-भ्रम्यापि प्राणी न शान्तिमृच्छति। यथा यथा स सुखैषणां करोति तथा तथा दुःखशतं लभते। कोऽत्र हेतुः? कथं साम्प्रतं शाश्वतिकीं शान्तिमाप्नुयान्मानवः?" इति। श्रुत्वैतन्मुहूर्त्तमिव स्थित्वा परिभ्रमदमन्द-मन्दरगिरि-परिमथित-पयः-पारावार-तरङ्ग-धवल-स्मितेन मोहयन्निव नो महर्षिरभाषत—"वत्साः! साम्प्रतिके समये तु सविशेषं विश्वस्य दुर्दैवविलसिता नरी-नृत्यति सर्वतः। पश्यत, महाकाल इव विश्वविलयनैककुतूहली करालः कलिकाल आवृतवृतीरिव श्रुतिमात्रावशेषाश्चिकीर्षति श्रुतीः। स्मृतितः प्रच्यावयितुमभिलषति स्मृतीः। दर्शनमात्रैक-फलानि विधित्सति[1] दर्शनानि। दग्धाङ्गानीव समुपजिह-सिषति[2] वेदाङ्गशास्त्राणि, पुराणभवनानीव सिसाधयिषति[3] तृणत्याज्यानि पुराणानि, सरसमिति पचेलिमम्फलमिव जिघ-त्सति[4] भक्तिमाधुर्यम्, रसायनमिति कवलीकर्त्तुन्त्वरयति च योगभावनोद्रेकम्। किम्बहुना, येन केन प्रकारेण मातुर्गीर्वाण-

१. विधातुमिच्छति। २. समुपहसितुमिच्छति। ३. साधयितु-मिच्छति। ४. खादितुमिच्छति।

गिरो निखिलमेव निधानमपि मुमुषिषति[1], यत्र हि वरीवर्त्ति शान्तेरमूल्यो निधिः। हन्त, सम्प्रति तु नव्यसंस्कृतिसंस्कृताः पण्डितम्मन्या अधन्याः शास्त्राण्येतान्यवैज्ञानिकानीति प्रत्याख्याय तानि दूरतस्त्यजन्ति, पत्युर्नामग्रहणे कुलाङ्गना इव तन्नामोच्चारणेऽपि ह्रियमनुभवन्ति, पवित्रात्मान इव तानि न परिपिस्पृक्षन्ति[2], न पिपठिषन्ति, न शुश्रूषन्ते, न दिदृक्षन्ते च। प्रत्युत नितरां निन्दन्ति, अतितरान्तिरस्कुर्वन्ति, सुतरां दृढमुपहसन्ति च। अतोऽस्यां स्थितौ कुत्र शान्तिः, कथं शान्तिः कीदृशी च शान्तिः? वर्तमानेऽनेहसि "आत्मोदयः परज्यानिः" इमामेव नीतिं समर्थयमानाः सर्वात्मना भगवतीमिन्दिरामनुधावमानाश्चैनस्विनो[3] लोकाः क्रान्तिमेव तन्तनति नक्तन्दिवम्। इदानीन्तु नाभिनन्दनीया अभिनन्द्यन्ते, न पूजनीयाः पूज्यन्ते, न सम्माननीयाः सम्मान्यन्ते, न पितरौ समाद्रियेते, न शासकानुशासनं सुसेव्यते, न स्वीया संस्कृतिः स्वीक्रियते, न चास्माकीना भारतीया सभ्यतैव परिपाल्यते, नापि च परमेश्वरः श्रद्धाकोटौ समानीयते। अद्य तु यत् किमपि मनसि समुदेति तदेव प्रलप्यते, यत्किमपि स्वबुद्धौ परिस्फुरति तदेव समाचर्यते, यत् किमपि चेतश्चिकीर्षति तदेव विना विचारङ्क्रियते च। साम्प्रतन्तु सर्वत्र नेश्वरे विश्वासः, न गुरुषु गुरुभावः, न च शास्त्रेषु श्रद्धाभाव एव। परमिदं सर्वमीश्वरोपास्तेरभावस्यैव दुष्फलम्। यतो हि ईश्वरोपासनं नाम भोगापवर्गमार्गप्रदर्शने निस्तैलः प्रदीपः, निदाघेऽपि निस्तापकर आतपः, शैत्येऽपि शान्तिकरस्तुहिननिकरः,वर्षास्वपि ह्यक्लेदकरो वारिनिर्झरः,शेखरायमाणं ज्ञानञ्च

---

१. चोरयितुमिच्छति। २. परिस्प्रष्टुमिच्छन्ति। ३. पापिनः। एनःपापापराधयोः इति कोषः।

सर्वविधविज्ञानानाम्" एवं प्रवचनपरे मुनिप्रवरे मध्य एवापरः कोऽप्युपनाथितवान् भगवन्तं तम्–"स्वामिन् ! श्रूयन्ते वहुविधा ईश्वरा अस्माकं शास्त्रेषु । कश्चन तं निर्विशेषं निर्दिशति, परस्तं परात्परं परिचिनोति, अपरः परमेश्वरम्प्रतिजानीते, अन्यस्तमव्ययम्मनुते इति । किमेते विभिन्नाः, उत एकस्यैव स्वरूपभूताः ? एषु क उपासितव्यः ?" इत्येवम्प्रार्थ्यमानो महात्मा प्रत्यभाषत–"ननु दिग्-देश-काल-सङ्ख्याद्यनवच्छेदादसीमोऽत्यनपिनद्धो भावोऽशेषबलनिधिरखण्डात्मा परमेश्वरो हि परात्परश्चिदात्मा निर्विशेषनाम्ना समाम्नातः । असीमत्वान्नायं निर्विशेषः पुरुषत्वेन कथयितुं शक्यते, पुरुषस्य हि पुरावच्छिन्नतया पुरतः सीमित्वात् । तदेकमेवाद्वितीयम्ब्रह्म । स एष परमेश्वरो निर्विशेषो वा मायावलोदयान्मायाबलोपाध्यवच्छेदेन प्रमितो भूत्वा निर्गुणः सन् चिदात्मा मायामितायाम्पुरि वसन् पुरुषो नामाख्यायते । स च त्रिविधः— महेश्वरः, ईश्वरः, जीवश्चेति । अत्रेदमपि हृदि करणीयं यदस्य परात्परस्य निर्विशेषस्य मायाबलावच्छिन्नः कियांश्चिदेव भागो मायी भूत्वा पुरुषो भवति । अनन्तानि मृत्युबलान्यस्मिन् निर्विशेषामृतब्रह्मणि सर्वत्रोपपद्यन्ते । अथैतस्मिन् मायाबले यावता ह्यंशेनान्यानि बलानि भूयसा चीयन्ते स तावच्चितिबलोपपन्नश्चिदात्मा पुरुष इत्यभिधीयते । अयमेव पुरुषो योगमायात्रयीभेदात् पुरुषत्रितयरूपतां लभते– अव्ययः, अक्षरः, क्षरश्चेति । तत्रालम्बनमव्ययम्परम्ब्रह्म, निमित्तकारणमक्षरम्परमम्ब्रह्म, उपादानकारणं क्षरश्च महद् ब्रह्मेत्येक एवात्माऽयमात्मनि आत्मना आत्मानम्परिणमय्य त्रिविधरूपताम्प्राप्नोति । सोऽयमेव त्रिपुरुषस्वरूपः पुरुषः शास्त्रेषु षोडशकलनाम्नापि निर्दिष्टः । स एव ब्रह्मा, स एव विष्णुः, स एव शिवश्चेति त्रयाणामेषामेकस्यैवेश्वरस्य स्वरूपत्वेन हृदये

चाविनाभावतयाऽन्तर्यामिरूपेण निण्यं[1] सहावस्थानाद् एकस्योपासनया अपरः समुपासितो भवति। अत्र भेदबुद्धिर्न लोकानां श्रेयसे भूयसे"—इत्येवं सुचिरम्महता मनोयोगेन महामुनिकपिल इव सप्रणिधानम्परमेश्वराभिधानं सविज्ञानं समुपदिशति तपस्विविपश्चिति परिणतो दिवसः। परिभ्रमणक्लान्तो दिननाथः स्वकरान् संक्षिप्यास्ताचलम्प्रत्याकृष्टः। तस्य स्वागतार्थमुत्सुका वारुणी दिक् लज्जितेवारक्ता जाता। मुनिवरोपदेशाप्तवैराग्याणीव कमलकल्पकुसुमानि समकुचन्। लघीयसाऽनेहसा च नीलाम्बरम्परिधाय रजनीनायिकापि परितः पर्यटितुमकामयत।

## रात्रौ निवासः

**85.** अथ निखिलदिन-परिभ्रमण-परिश्रम-परिश्रान्ततयेव तुहिन गिरि-तुङ्गतर-शिखरेषु स्खलितपादम्मार्त्तण्डं शीतं जलं प्रापयितुमिवार्घ्यदानक्रियाङ्कर्तुम्महर्षिरपि गङ्गाकूलमुदचलत्। वयन्तु मुनिवरवितीर्ण-ज्ञानसुधा-पान-व्यामुग्ध-मानसाः कर्णभावमेव सर्वेषाङ्करणानां[1]कामयमाना अपि केवलं सौभाग्यात् तच्चरणसम्मान-सम्पादन—सञ्जातामन्दानन्द—सन्दोह-तुन्दिलतरान्तराश्चतुर्गुणितमनोमोदाश्च निखिलगिरि—निर्झर—सङ्गम—सङ्केत-स्थल-केन्द्राय-माणेऽपरिमाणे पापपुञ्जापहारिणि भागीरथीवारिणि हस्तौ पादौ प्रक्षाल्य तदाचम्य चाश्रमम्प्रत्यागताः।

**86.** अथ याममात्रावशीर्णायां शर्वर्यां समुज्जृम्भिते घोरान्धतमसि मुनितल्लजेनाप्यागत्य भूयोऽभ्यभाष्यत—"ननु नैव प्रातर्गोमुखाभिमुखम्प्रस्थातव्यं युष्माभिः शुभंयुभिः[2]। सर्वैरेवायुष्कामैः श्वो गङ्गोत्तरीयं स्थलमेव गमिकर्मीकरणीयम्"-इति



१. निण्यमिति गुप्तार्थे वैदिकप्रयोगः।

मन्त्रमुग्धेष्विव सर्वेषु साञ्जलिबन्धम् 'आम्' इत्युक्तवत्सु समुपजातसन्तोषात् तपस्विराजात् समुपलभ्याशिषां राशींस्तदन्तिकमेव समशेरत सर्वे। परन्त्वहन्तु शान्तं विधाय स्वान्तं शयनमधिशयानोऽप्यश्रुतपूर्व–ब्रह्मज्ञान – समुत्पन्न – कौतुकास्तमितसमस्तान्यव्यापारः स्वर्लोकलोकेतरदुर्लभं तपस्वि-प्रवचन-वचनजातं स्मारं स्मारं सुधासागरे निमग्न इव, आनन्दसरःसमवतीर्ण इव, निखिललोकानामुपरि वर्त्तमान इव, मानवमनोरथानामप्यभूमिम्पुण्यसंचितिमधितिष्ठन्निव, आत्मशास्त्रसारं विचारयन् विद्युत्सञ्चलितयन्त्रचक्रमिव परमम्भ्रान्तमात्मनो मनो न कमपि निश्चितबिन्दुमस्पर्शयम्। मुहुर्मुहुर्मम मनसि इम एव भावा उदभवन्– अहो निराडम्बरस्य महात्मनोऽस्य वाचामगोचरा योगसिद्धिः, निर्दूष्यं वैदुष्यम्, अलौकिकं प्रतिभाचातुर्यम्, धिषणप्रतिस्पर्धिनी धिषणा, पीयूषवर्षिणी वाणीनैपुणी, विचित्रा वाग्धोरणी चेति किमयं मुनिसत्तमः श्रीगोतमः, उत महामुनिर्जैमिनिः, अथवा प्रतिवादिभयङ्करः श्रीशङ्करः, वा नास्तिकमदसूदनः श्रीगुरुवरमधुसूदनः-इत्येवं तर्काकुलितचेताश्चिरं जागरित्वा यामैकशेषायां त्रियामायां निद्रामवाप्नवम्।

## साधोरन्तर्धानं प्रतिप्रस्थानञ्च

**87.** परं हन्त हन्त, प्रातः प्राचीनमुखचुम्बिनि मरीचिमालिनि समुत्थायास्माभिर्न तत्र मुनिपुङ्गवस्य दर्शनं लब्धम्। कुत्र गतः, कथं गतः, कदा गतः, कस्माद् गतः, केन गतः—इत्युद्-

१. इन्द्रियाणाम्। २. शुभान्वितैः। अत्र 'अह शुभयोर्युस्' अनेन युस् प्रत्ययः।

भ्रान्ता इव, अपहृतहृदया इव, परिमुषितस्वापतेया[1] इव सर्वे सर्वतः पूर्णम्भ्रामम्भ्रामङ्कथमपि तमलभमाना विस्मय-विस्मृत-निमेषोन्मेषलोचना आमध्याह्नं तत्रैव तम्प्रतीक्ष्य साक्षात्कृत-धर्माणो महर्द्धयो महर्षयो भवन्ति, येषामृतम्भराणि परोरजांसि प्रज्ञानानि न क्वचिद् व्याहन्यन्ते इत्यनभिशङ्कनीयानीति प्राचां वाचाम्प्रसारे श्रद्दधानास्तत्रावस्थानमपि सान्तरायं मन्वाना मुनिमहाराजस्यादेशानुसारं गोमुखाभिमुखप्रयाणम्परित्यज्य तत एव प्रतिगन्तुं निश्चलीकृतनिश्चयाः परं विषण्णा अपि शीघ्राय-माणाः[2],नग्नमुषितप्रख्याः[3] पथि हरिकीर्त्तन-पुण्यध्वनि-धाराभि-र्गिरिकन्दरां धराधरधरां नदीधारां धाराधरञ्चापि ध्वनयन्तो विनान्तरायं मनागुन्मीलत्सु विशदप्रभेषु भेषु गङ्गोत्तरीयमेव देशं प्रत्यागत्य स्वं स्वं निवेशम्प्राविशन्, भोजनादितो निवृत्य च ससुखमशेशयुः[4]। परम्पदसञ्चलन-क्लान्ता मदीया कान्ता तु शिरस्तोदमनुभवन्ती अपि परिभ्रमण-क्लान्ति-परिजिहीर्षया झटिति तुहिनशीतले जले कदुष्णतां सञ्चार्य हस्तौ पादौ च प्रकामम्प्रक्षाल्य पयस्यापानेन धमनिषु पुनर्नवीनोत्साहं सञ्चार-यन्ती नानाभावनाभिः प्रचुरतरशीतवतीमद्यतनीं कृष्णाजिन-योनि[5]-रोमराजिनीं रजनीं सानन्दमगमयत्।

---

१. परिहृतधना इव। २. शीघ्रं गच्छन्तः। अशीघ्राः शीघ्राः भवन्तः इति शीघ्रायमाणाः "भृशादिभ्यो भुव्यच्वेः" इति क्यङन्ताल्लटः शानजादेशः। ३. हृतधनदिगम्बरतुल्याः। प्राक् मुषितः पश्चात् नग्नः= नग्नमुषितः, नग्नमुषितेन प्रख्या (समानता) येषां ते तथोक्ताः 'पूर्वकालैक-सर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति समासे राजन्तादित्वात् 'राजन्तादिषु परम्' इति पूर्वकालस्य परनिपातः। ४. शीङ् धातोर्लङि यङ् लुकि रूपम्। ५. कृष्णाजिनयोनिः—कृष्णमृगः।

## गङ्गोत्तरीतः प्रतिप्रयाणम्

८८. प्रातश्चावां प्रालेयस्नाते[1] तत्र पर्वतीयप्रदेशे शैत्य-प्राचुरीमसहमानौ धारातः समानीतेन गङ्गोदकेन गृहान्तरेव गात्रमार्द्रीकृत्य वासरारम्भकृत्यञ्च सम्पाद्य विग्रहवतीम्भगवती-म्भागीरथीम्पुनर्नमस्कृत्य "परम्परीणां[2] कुलमर्यादां विना-न्तरायम्पुत्र-पौत्रीणतां[3] नयन्तु भवन्तः"—इत्यादिकमर्चकैर्वितीर्ण-माशीर्वचः शिरसा स्वीकृत्य गृहीतसिताप्रसादौ सुविहितपाथेयौ चिरादनवलोकितबन्धुजन–मिलनोत्कण्ठया निजशिशुजन-वदन-कमलदिदृक्षया च कालातिपातासहेन मानसेन मरुत्तरयानेनैव ततः प्रस्थाय होरैकमात्रेण भैरवघाटीमागच्छाव। तत्र च स्वल्पं विश्रम्य पथिप्रज्ञ[4]म्भारवाहिनमेकम्पुरस्कृत्य बहुभिर्यात्रिभिः सह पूर्वपरिचितस्यैव पथोऽध्वनीनौ सञ्जातौ।

८९. किन्तु हन्त, तत्र स एव पूर्वपरिचितो विकटो विपथः, सैव सुविदिता सङ्कुचिता सरणिः, तदेव च प्रतिपदमुच्चावचा-ध्वनो लङ्घनम्। अतः क्वचिद् वनवल्लरीशाखामवलम्ब्य, क्वचित् करयष्टिकावलम्बनं संलभ्य, क्वचित् क्षणं विश्रम्य क्षणञ्च जलेन गलनलिकार्द्रीकृत्य, क्वचिन्मार्गपतितान् प्रचण्ड-गण्डशैलान् समुल्लङ्घ्य पदे पदे हृत्कम्पनं, दीर्घनिःश्वासान्, रोमोद्गमान्, स्वेदधाराश्चानुभूय भूयः कथमप्येकहस्तेन गहन-वनवल्लरी-वितानकृतच्छायमपि विच्छायवदनमुद्वहन्त्यै तथाऽऽ-ननेन्दीवर-विलुलितालकलतायै[5] श्रमबिन्दुश्लिष्टायै जायायै समव-

---

१. तुहिनकणभूषिते। २. परांश्च परतरांश्चानुभवतीति परम्परीणा, ताम्। 'परोवरपरम्परपुत्रपौत्रमनुभवति' इति खप्रत्ययः। ३. पुत्रांश्च पौत्रांश्चानुभवतीति पुत्रपौत्रीणाः, तस्य भावः, ताम्। ४. पन्थानं प्रजानातीति पथिप्रज्ञस्तम्। ५. मुखकमल-लम्बमान-चूर्णकुन्तलायै।

लम्बनम्प्रयच्छन्नपरेण च यष्टिकयाऽऽत्मानं सन्तोलयन् मध्याह्नात् पूर्वमेव हिमनिष्कलङ्कां लङ्कां प्रत्यागमाव। तत्र च सञ्चरण–परिखिन्न – यात्रिजन – स्वेदोदबिन्दु – वृन्दविलोपिना प्रालेयाचलशीतलेन विकम्पितनीपवनेन पवनेन क्षणेनैव सर्वो हि सञ्चलनायासोऽपसारितः।

## लङ्कायां सरःशोभा

90. ततश्च सौविध्यसञ्चारकेण भारवाहकेनोपदिश्यमान-मार्गावावां पश्चिमायां ककुभि किञ्चिन्नीचैर्गत्वा गङ्गोपकूलमुप-स्थित-गिरिचर-तरुणीजन-वदन-कलानिधि-बिम्बसुन्दरं, चटुल-कोकिल-कुल-कलित-नूतन-लताङ्कुरं, सूक्ष्म-मुक्ता-चूर्ण-धवल-गिरि-रेणु-पुलिनं, वलक्ष-पक्ष-महनीय-वन्य-खगकुल-कामिनी-कलकूजन-कोलाहल-लोभनीय-परिसरं, तटविटपि-कोटर-कोटि-कुलायालय-निलीयमान-विविध-विहङ्गम-कदम्बकं, सुन्दरारविन्द-मकरन्दपान-गुञ्जन्मिलिन्दवृन्दं, मोदमान–रममाण–तरुण–गिरिवासिजन-मिथुन–सम्मर्द-सुमृदित–शोभनशाद्वलं, सरस–कोमल–किसलय–कमनीय–स्निग्धच्छाय–तरुणतर – तरुवरतलं, श्रान्ताध्वनीनजनानुकूलं सरसः कूलमगमाव। इदन्त्वासीत् पूर्वस्मादन्यदेव। यत्र ह्येकतस्तटोपकण्ठं युवति–रक्ताधर–सौकुमार्यविजितानि प्रियङ्गुलताकिसलयानि लज्जया जल-निमग्नकामनयेव स्थितानि शोभन्ते स्म। परतश्च परितो हिमगिरि-द्रोणीषु चिरादयाचित-तपोभिः कमनीय–कामिनी–मनोहरोरु-युगलौपम्यमप्राप्य पवनान्दोलित–दलैर्नरीनृत्यन्त इव प्रतीयन्ते स्म कदलीतरवः। अन्यत्र सरोऽवगाहमाना अङ्गनाः प्रतिबिम्ब-व्याजेन जलदेवीभिराहूयमाना इव राजन्ते स्म। अन्यतः प्रबल-पवन–परिहृत-लता-विगलित-सुरभि-सम्भृत-सुम-समूह-मकरन्द-माघ्राय मदोन्मत्ता इव भ्रमन्ति स्म भ्रमराः पुष्पस्तबकेभ्यः

पुष्पस्तबकान्तराणि । ईदृशे तत्र स्वर्गसहोदरे सरससारसरसित-सरोवरपरिसरे कस्मिश्चिदेकस्मिन् धवलशिलातले नवदलास्तृते समुपविश्य सक्षणं काश्चित् कला मनोविनोदालापैर्व्यपगमय्य विपणिक्रीतेनामृतायमानेन कवोष्णेन भोज्येन जठरपिठरम्परिपूर्य सुधासमधिकं स्वादूदकञ्च निपीय अनभिलषन्नपि गृहजनोत्कण्ठया मरुत्तरयानद्वारा तामेवोत्तरकाशीमभ्यचलम् ।

## उत्तरकाशीमार्गे वर्षोत्पाताः

91. अथ च गण्डशैलान् परित्यजन्ती, जलप्रवाहानस्पृशन्ती, गुहामुखान्यनवलोकयन्ती, गिरिशिखरेषु खेलन्तीव मरुत्तरशकटिका यावदेव मार्गपूर्वार्धमुल्लङ्घ्य परार्धम्प्राविशत् तावदेव स्वल्पेनैव कालेन सहस्रांशोरस्ताचल इव, समुत्साहसम्पदो धूमकेतूद्गम इव, यात्रिजन-मनःकुरङ्ग–कदम्बकानाम्बन्धनगुण इव, दुर्गमगिरि-मार्गाणां कालभुजङ्गम इव, गाढान्धतमसा पुरःपन्थानमुपरुन्धन्निव शैत्यसम्राजः पुरोयायि-पुरोहित इव सप्रभञ्जनो धाराधरो वियति परितः प्रासरीसरीत् । युगपदेव चतुर्दिग्भ्यः समायातैस्तमालवनसच्छायैर्बलाहकैः क्षणेनैव स्वायत्तीकृतम्पार्वतं स्थलं निखिलम् । क्षणञ्चञ्चलाश्चपलाः, क्षणं सरोषा अशनिनिर्घोषाः, क्षणमितस्ततः ससङ्घाताः प्रस्तरपाता इति पर्यायनिर्वर्त्तनीयमिव स्वनियोगं सम्पादयन्त इमे यात्रिणां हृदयेषु महतीम्भीतिं समजीजनन् । येन पूर्वं कवोष्णा निःश्वासाः समवरीवृधीषत पश्चात् झञ्झावाताः, आदौ त्रस्यद्–यात्रिणां नयनेभ्यो जलधारा अवरीवृषीषत पश्चाद् बलाहकानां कदम्बकेभ्यः, प्रथमं सर्वेषाम्मनसि मालिन्येन पदमधायि ततश्च गिरिनिर्झराणाम्पयसि । अपि च करकापातपर्यस्तैः पादपपल्लवैः सहैव विलुलिताः सर्वेषां स्वस्वबन्धुजन-दर्शन-शोभनाशाः । घन-

गर्जन-स्पर्धयेव गम्भीरघोषं वितन्वद्भिर्निर्झररयैश्च साकमेवाव-रीववृधुर्वपुर्वेपथु-प्रवाहाः ।

**92.** सत्यं हि सर्वथा दुर्निवारिता व्यसनोपनिपातानाम् । यत एषः पुनः पृथगेव गण्डस्योपरि पिटकः संवृत्तो यद् घनघोर-गर्जन-दुर्जयान्धकार-प्रचुरतरप्रचार-चञ्चच्चञ्चला-चमत्कार-साम्राज्ये मनागेव शैथिल्यमुपगते, पर्वतीयया वात्यया सह प्रस्तरकणप्रपात इव तुषार-पातः समारब्धः । येन क्षणेनैव सकलो हि तत्रत्यः पर्वतीयप्रदेशः पयःपारावारेण परिप्लावित इव, सुधानिष्यन्देन विलिप्त इव, पीयूषरसेन समभिषिक्त इव चाजाजायत । एवम्भूते वातावरणे मरुत्तरयानस्य पदात्पदमपि पुरःप्रसर्पणं विघ्नबहुलमिवाभूत् । अतो विवशैरस्माभिर्यात्रिभि-स्तत्र रात्रौ नातिदूरमुपत्यकायां स्थिताया गिरिग्रामटिकाया-स्तृणकुटीरिकासु सत्स्वपि प्रचुरेषु नीशार[1]–राङ्कवादिषु[2] कट-कटायद्भिर्दन्तैः सकष्टमौष्यत । शैत्याधिक्याद् वात्याप्राबल्याच्च कृतेऽपि प्रयत्नशते नैवाक्षिणी न्यमीलिष्टाम् । हन्त, सर्वे हि ललनाऽऽलिङ्गनं विनैव रागानुविद्धलोचनाः, व्रणिताधरपल्लवाः, सीत्काराञ्चितवदनाः, पुलकितावयवाश्च सञ्जाताः ।

**93.** अथ प्रातर्विकीर्ण–कनक-कपिशांशौ सहस्रांशौ निरन्त-रायतामुपयाति निरन्तरम्पर्वतपथे ततः प्रस्थाय होराद्वयेनैव पूर्वपरिचितां सततमध्यापननिरतैरध्यापकैरध्येतृभिश्चाध्यासितां मुक्ताभियुक्तजनसंसेविताम्परितो हृद्योद्यानमालावलयितां रिङ्ग-त्तरङ्गसङ्गतगङ्गोपकूलञ्च नानाविध–मनोहारि-पाषाणघट्ट रूप-

---

१. नीशारः=प्रावरणम् 'रजाई' इति प्रसिद्धम् । २. राङ्कवं= ऊर्णादिनिर्मितं कम्बलम् ।

शोभितां कस्या अप्यनुपमायाः सुषमायाः प्रसारिकां तामेवो-त्तरकाशिकां विघ्नैरनिघ्नीकृताः सानन्दं सर्वे समायाताः ।

## उत्तरकाश्यां विश्रामः

**94.** तत्र हि चिरादस्मदागमनक्षणम्प्रतिक्षणम्प्रतीक्षमाणं तमेव हृदयनिर्विशेषं सम्पादितसपर्यं सुहृद्वरं समया मया समुपेत्यावश्यकं कार्यजातञ्च सम्पाद्य तथा भगवतो विश्वनाथस्य दर्शनेनात्मानं धन्यतामापाद्यावशेषोऽस्माकं दिवसो मिथो यात्रा-संस्मरणप्रधानैः सुखालापैर्व्यत्यगम्यत । रात्रिरपि तथैव नः ससुखस्वापं व्यत्यैत् । प्रातश्च समुदिते पाकशासनसमाने सुधा-मोदितशोभे[1] ब्रघ्ने प्रातःकृत्येभ्यो निवृत्य भूयोऽपि शुभङ्करं शङ्करं नमस्कृत्य कृतस्वल्पाहारः सुहृद्राजेनाथ पुनरप्यागन्तुं सानुरोधमनुरुध्यमानः प्रास्थानिकानि मङ्गलपद्यानि बहुवारं व्याहृत्य सानन्दं हृषीकेशमनुयातुम्प्रथमधृत-सव्यपादो मरुत्तर-शकटिकामध्यास्य ततः प्राचलम् ।

## हृषीकेश-मार्गदृश्यानि

**95.** अथ च पथि पूर्ववदेव क्वचित् कुरङ्गकुलसेवितशाद्वलं, क्वचिद् विलुलित[2]–विहगकुलमालं, क्वचिद् विकसितार्जुन-तरुणतमालं, क्वचिन्नीरदनील-तमाल-तरुतल-लास्य-लीन-मयूर-मण्डलं, क्वचिद् रममाण-मनोहर-हरिणमिथुन-विलास-सुभगं, क्वचित् प्रचुरतर-तरुण-पशुकिशोराभ्यसितरोमन्थं, क्वचिदमन्द-स्यन्दमान-मकरन्द-सन्दोह-संलग्न-भ्रमरकुलं, क्वचिन्मोमुद्यमान-कीर–कपोत–कोकिल–प्रभृति–खगकुलशोभनं वनं दर्शं दर्शं

---

१. इन्द्रपक्षे-सुधा+मोदितशोभे, ब्रध्न (सूर्य) पक्षे च सु+धामो-दितशोभे इति पदच्छेदः । २. विलुलिता=छिन्ना भिन्ना विहगकुलानां माला यस्मिंस्तत् ।

क्वचिच्च नादेयम्पयो निपीयाभ्रंलिह-शिखरिशिखरमभि समुड्डीयमानाः श्वेतप्रस्तर-प्रचितश्रेणीरिव बकुलकुलश्रेणीः पश्यन् काामप्यमन्दाम्मुदम्मानसे सञ्चिताङ्कुर्वन् बहुदूरं प्रभञ्जन-जव-विकम्पितवेणुवन-विघर्षण-सञ्जातेन दावानलेन निखिलमपि वनं लेलिह्यमानमिव शङ्कमानो मानसे भीतिमनुभवन्नपि परितो वनपुष्प-परिमल-परम्परा-प्रवाहिणं, शिलाजतु-मकरन्द-संवाहिनम्मातरिश्वानं सेवमानः, कुहचित् प्रौढा इव विगतचापल्याः कुल्याः, कुत्रचित् क्षेत्रेषु विरचित-चक्रवालिकाः[1] शालिपालिका बालिकाः, कुहचन च शस्यमञ्जरीर्विचिन्वतीः स्वामिसहायाः शक्रचापवक्रभ्रुवो हिमाचलोपत्यकारण्यरमणीर्विलोकयन् पदे पदे गण्डशैलपरिचङ्क्रमणोपत्यकोल्लङ्घनाधित्यकाधिरोहण-सेतुसमारोहणादिकं वितन्वन् विनान्तरायं निखिलमध्वानमतीत्यास्तमुपयाते तपनप्रतापेऽहं हृषीकेशम्प्रत्यागच्छम् ।

## गीताभवनं प्रत्यागमनम्

**96.** ततश्च तदानीमेव सञ्चलनातिशयजनित-खेद-खिन्न-यात्रिजन-घर्माम्बु-पृषदपहारिणि प्रवहति सायन्तने तनीयसि नभस्वति भुवनवलयं विजेतुं कृतप्रस्थानस्य स्वदयितस्य मदनस्य रति-विकीर्णेषु वियति लाजाञ्जलिष्विवेषदुन्मिषितेषु नक्षत्र-चक्रेषु परस्परश्रियमतिशयानैरिव विचित्रैरपि सचित्रैः रम्यातिरम्यैर्हर्म्यैरुपशोभितं गीताभवनमभ्येत्य सर्वैः सुहृद्बन्धुभिः सम्मिल्य निर्वर्त्तितसायङ्कालिकाशनादिकार्योऽहं सानन्दमस्वाप्सम् । अत्रैव तृणीकृतस्त्रैण-विलासैः श्रद्धा-निर्भर-मानसैर्मुनिजनैरिव गृहीतव्रतैर्विस्मृत-संसार-व्यवहार-सम्भारैः



१. विरचितमण्डलाः । "चक्रवालं तु मण्डलम्" इत्यमरः ।

पूर्णात्मारामैः सुमनोऽभिरामैः श्रीरामभद्रभक्तैर्वृत्तेन कृत्येन च निरवद्यैः सत्यवद्यै[१]स्तत्रत्यैर्महात्मजनैः सह अनवद्या ब्रह्मविद्या वितन्वता दिनद्वयं विश्रम्य ततो हरिद्वारञ्चागत्य मया नृसिंह-भवने स्थानमलभ्यत ।

## हरिद्वारे विश्रम्य गृहागमनम्

**97.** सर्वविध-सुख-सुविधागारे हरिद्वारे हि कदाचित् सर्वथा निराकुले कनखले, कदाचन रामणीयक-स्थलेश्वरे श्रीविल्व-केश्वरे, कर्हिचित् सुरालय-सहोदरे सप्तसरोवरे स्थाने, कर्हिचन विरल-जन-सञ्चारायां विमल-जल-सुधाधारायां नीलधारायां, कर्ह्यपि परमप्राक्तने चण्डिकायतने चैवम्प्रतिदिनं नवीनानीव सुख-निकुरम्बाणि सञ्चिन्वन् तथा प्रतिसायं गङ्गोपकूलं नैकनी-वृत्[२]-समायात-सीमन्तिनी-जलकेलि-विलास-हास-लोलावलोकन-कुतूहल-विकसित-विविध-वदन-विकाराणाम्मार-विकार-प्रसार-प्रसूत-दूषित-प्रभूत-भावानाम्मानवानां विभिन्नाभिश्चेष्टाभि-स्तथा श्लथित-चीनांशुक-प्रकटीकृत-सर्वसुभग-शरीराणां,समुल्ल-सित-लावण्य-न्यक्कृत-लवणार्णववेलानां, वलिभं[३] मध्यं दधा-नानां कर्णजाह-विलोचनानां[४], मनसिज-शरासन-भ्रूयुगानां[५],

---

१. सत्यवादिभिः । सत्यवादः=सत्यवद्यं, सत्यवद्यं येषां ते सत्यवद्याः तैः । 'वदः सुपि क्यप् च' इति चकारात् यत् । 'अर्श आदि-भ्योऽच्' इत्यच् । २. जनपदः । ३. वलित्रययुक्तं मध्यं धारयन्त्यः स्त्रियः, तासाम् । वलयोऽस्मिन् सन्तीति वलिभस्तम् । "तुन्दिवलिवटेर्भः" इति भप्रत्ययः । ४. कर्णान्तिनेत्राणाम् । कर्णयोर्मूले कर्णजाहे, कर्णजाहयो-र्विलोचने यासां तास्तासाम् । 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' इति जाहच् प्रत्ययः । ५. मनसिजशरासनमेव भ्रूयुगं यासां तासाम् । भ्रूयुगकर्षणमात्रतः कामोद्रेककारिणीनाम् इत्यर्थः ।

वीतमाल्य-कचपाश-विकीर्ण-व्यस्त-हस्तद्वयानां[1], समवतारित-वसन-भूषणानां, सूक्ष्माम्बर-दृश्यमान-मृणाल-विमलोरु-युगलानां, कुञ्जर-कुम्भ-संनिभ-पृथुपयोधर-प्राग्भार-भुग्न-मध्य-भागानां, घनजघन-भरालस-विलसन्मन्द-गमनानां, जल-क्लिन्न-परिधाना-नामिन्दिरानुजाननानां ललनोत्तमानाम्मदवलित-ललित-गति-माधुरी-मधुर-दृष्टि-चातुरी-मृदु-हसिति-प्रभृतिभिरपि मनोमोदं लभमानो दिवसचतुष्टयं तत्र सशातमतिवाह्य पञ्चमेऽह्नि सायं सुर-सरिति सलिल-केलिसंस्रस्त-स्तन-नितम्ब-वसना रससदनाः पुरतरुणीः दर्शं दर्शं पापान्यनुभूयेव सांशुके[2] भगवति पूषणि स्नातुमिव पश्चिम-पयोधौ प्रविशति गगन-गङ्गोपकूलं कलिता-वासैस्तापसैश्च समर्पितेषु सायंसन्ध्याऽर्घ्यजल-चन्दन-पुष्पेष्विव क्वचित् क्वचिद् विकसितेषु नक्षत्रेषु हरिद्वारतोऽपि प्रस्थाया-विदितगतयामां त्रियामां रैलशकटिकायामेव व्यपगमय्य प्रातर्दिल्लीमेव शंयुः[3] समागच्छम् । तत्र च समवसायित-प्रातः-कृत्यो निखिलं दिनं कुशासन[4]बहुलामपि सुशासनावलम्बितां, स्थूलदर्शनवतीमपि सूक्ष्मदर्शिनीमुदग्रामपि शान्तिपरां सुवर्ण-पूर्णामपि दुर्वर्ण[5]बहुलां, प्रचुरहासविलासामपि पृथुकार्त्त[6]स्वरां,

---

१. च्युतकुसुमानां केशपाशानां विकीर्णाय=ग्रन्थिनिर्मोकाय व्यस्तम्=ऊर्ध्वं व्यापारितं हस्तद्वयं यासां तासाम् । २. वस्त्रसहिते, किरणसहिते च । पापप्रमार्जनाय सचेलस्नानं धर्मशास्त्रसम्मतम् । ३. शंयुः=शं सुखमस्ति यस्य सः शंयुः । 'कंशंभ्यां बभयुस्तितुतयसः' इति युस् । सानन्दः इत्यर्थः । ४. कुशानाम् आसनानि बहुलानि यत्रेति विरोधपरिहारः । ५. दुर्वर्णम्=रजतं तद्बहुलामिति विरोधपरिहारः । ६. पृथुकाः आर्त्तस्वरा यत्रेति विरोधः । पृथु=बहुलं, कार्त्तस्वरं=सुवर्णं यत्रेति विरोधपरिहारः ।

स्वदेशप्रेमविलसितामपि म्लेच्छ[1]मुखानुरक्तां,वरवर्णिनी[2]-विक्रयपरामपि धर्मपरायणां तामेव पूर्वपरिचितां देहलीं भूयोऽपि विलोकयास्तङ्गतवति भगवति विवस्वति ततोऽपि प्रस्थाय प्रातः समुदितेऽथ मङ्गलमये सूर्ये पुनस्तस्यामेव मरुभूमावुपेत्य कुत्रचिदपरिमितातपलुप्तघनरस[3]-वैभवान् पल्वलवरान् विदीर्णकर्दमतया स्फुटितहृदयानिव विलोकयन्, कुहचिच्च शुष्कपर्णमर्मरमिषकृतचीत्कारान् घर्मम्लानदलाधरान् तरुवरान् निदाघाभीलाद्[4]रुदत इव पश्यन् यथासमयं द्वितीयं ब्रह्मपुरमिवात्मपुरमागत्य लोचना[5]भ्यन्तरविसरद्धर्षवाष्पभरोद्वन्धमन्दहष्टिः सजायोऽहं परिवारजनेषु सम्मिल्य यात्रानन्दक्षणानामधीयन्[6] काामप्यमन्दाम्मुदमवेविदिषीति[7] ।

## उपसंहारः

कन्याऽऽरोहिणि रोहिणीपरिवृढे श्रीभास्करे मैथुने,
आशेभाक्षिवियन्नरश्रुतिमितेऽस्मिन् वैक्रमे वत्सरे ।
गद्यं काव्यमरीरचद्धि नवलो यात्राविलासाभिधं,
तेन श्रीलविहारिलालगुरवस्तुष्यन्तु साहित्यिकाः ॥

---

१. म्लेच्छमुखं=ताम्रमिति विरोधपरिहारः । 'अथ ताम्रकम् । शुल्वं म्लेच्छमुखम्, इत्यमरः । २. वरवर्णिनी=युवतिः, हरिद्रा च ३. घनरसं=जलम् । ४. आभीलं=कष्टम् । ५. लोचना०=लोचनाभ्यन्तरे विसरत्=घूर्णमानः यः हर्षबाष्पभरः, तस्य उद्वन्धेन=आपूरणेन मन्दा=मन्थरा दृष्टिः यस्य सः । ६. अधीयन्=स्मरन् इत्यर्थः । यात्रानन्दक्षणानामित्यत्र 'अधीयन्' इत्यस्य योगे 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी । ७. विद्लृ (लाभे) धातोर्यङि लुङि रूपम् ।

इति जयपुर–पारीक–कालेज–संस्कृतविभागाध्यक्ष-
श्रीनवलकिशोरकाङ्कर-गुम्फितं यात्राविलासं

※ सम्पूर्णम् ※

## कठिनशब्दानाम् अर्थाः

पृ० ३ शोचं शोचं=सोच सोच कर। सहकार=आम। समवसितेषु=समाप्त होने पर। लास्येषु=नृत्य। पृ० ४ भज्यमान=सेवमान। तनुतां=कृशता को। अनेहसि=समय में। तिग्मः=तीक्ष्ण। पृ० ५ शर्म=सुख। तुहिनकण=बर्फ के टुकड़े। तरणिकर=सूर्य की किरण। प्रपाणम्=शरबत। पृ० ६ शमनः=यमराज। दिदिक्षामि=बताना चाहती हूँ। निकषा=पास में। पृ० ८ आनन्दथोः=आनन्द का। सक्षणं=सोत्साह। स्वान्तेसदां=अपने शिष्यों का। पृ०९ संमर्दः=भीड़। सीव्यन्=सींता हुआ। पृ० १० निर्भरं=पूरी तरह। अहमहमिकया=पहले मैं पहले मैं इस भावना से। आरावाः=कोलाहल। मार्गय=ढूंढले। चेलाञ्चलं=ओढ़नी का आँचल। निष्कल=हे वृद्ध। वातायनीयं=खिडकी वाला।

पृ० ११ साम्रेडं=बार बार। पृषद्भिः=बूँदों से। उपवीजयन्ती=पंखा करती हुई। कौबेरीं ककुभं=उत्तरदिशा को। पृ० १२ सर्वाध्यक्षं=सबके सामने। करतालिकानां=तालियों से। कुहचन=कहीं। ग्रामटिका=ढाणियां, छोटे गाँव। पृ० १३ निकुरम्बां=समूह। शर्वर्यां=रात में। पृ० १४ क्षणदक्षणदा=उत्साहदायिनी रात। सप्ताश्वे=सूर्य। समवसायित=समाप्त। पृ० १५ कांस्कान्=किन किन। स्नानपरिच्छदं=नहाने की ड्रेस। शष्कुल्यः=पूडियां। पृ० १६ कूर्चिका=खुरचन मावा। सौत्रिकैः=दर्जियों के द्वारा। निषद्यायां=दूकान में। विश्रुतः=प्रसिद्ध। पृ० १७ अभ्रंलिह=गगनचुम्बी। पृ० १८ विचितिः=चयन। अध्वनीन=राहगीर। मुरज=मृदङ्ग। वल्लकी=वीणा।

पृ० १९ भुजङ्गः = सर्प, धूर्त्त । आलिन्द = आँगन। भोगि० = सर्प, विलासी । धनञ्जयः = अग्नि, धनविजेता । पृ० २१ दयितांस० = प्रियतम का कंधा० । विकर्त्तन + आतपः = सूर्य की धूप । शाटिकाः = साड़ियाँ । धम्मिल = बालों का जूड़ा। करेणुकां = हथिनी को । पृ० २२ क्षणारम्भा = उत्सवारम्भ। तनुमध्या = पतली कमर वाली, तनुमध्या छन्द । स्वैरं = स्वतन्त्र । अभिनवशालीनत्व = नयी सभ्यता । पृ०२३ पुटविधृत० = जेब में कंघा रखे हुये । पृ० २७ मनस्तोदेन = मन के कष्ट से प्राज्ये = समृद्ध । पृ० २८ कुलीनजन० = कुली लोग० । पृ० २९ विषय० = देश० । वृत्तिविवादः = जीविका के लिये, लक्षणाव्यञ्जनादि वृत्तियों के लिये विवाद । मित्रसापत्न्यं = सूर्य, मित्र से शत्रुता । पृ० ३० समया = पास । पृ० ३१ शरीररन्ध्रा = रोमकूप । अवदात० = गौर । पृ० ३२ विजित्वर० = जयशील० । द्यवि = आकाश में । क्रायं क्रायं = खरीद खरीद कर । पृ० ३३ वसुधासुधाशनैः = ब्राह्मणों के द्वारा । पूतिगन्ध० = दुर्गन्ध० । गन्धवहेन = वायु से । वृजिन० = पाप० । समुत्कः = उत्कण्ठित। पृ० ३४ दावदीधितिः = दावानल । मार० = कामदेव० । पृ० ३५ नीविं = नाड़े को । पृ० ३६ वितन्वती- फैलाती हुई । उपयाचितं = मनोती । मंक्षु = शीघ्र ।

पृ० ३७ भ्रमिरुजा = चक्कर आने की पीडा से । अनामयता = नीरोगता । अध्युष्य = रहकर । पर्यस्ते = फैल जाने पर। पृ० ३८ अनुसवनं = दोनों साँझ । परिरम्भणेन = आलिङ्गन, सेवन से । सुरस्रोतोवहां समया = गङ्गा के पास । उभयांस = दोनों कन्धे । कोरकित = रोमाञ्चित, कण्टकित । पृ० ३९ शरव्यभूता = लक्ष्य बनी हुई । तुहिनाविलां = कोहरे से ढकी हुई। दारिका = पुत्री । पृ० ४० विस्रम्भः = विश्वास । पृ० ४१ कौमार-

मापन्ना=कुँवारी रहती हुई। बाष्पपृषत्=आँसू की बूँद। निर्वचन=व्युत्पत्ति, व्याख्या। पृ० ४२ बह्वपत्या:=अधिक सन्तान वाले। काकणी=कोडी।

पृ० ४३ रोदसी=जमीन-आकाश। अनवसिते=असमाप्ति में। तुन्ना=दु:खी। परेद्यु:=दूसरे दिन। प्रत्यावर्तिता=लौटी। पृ० ४४ सुरगवि=संस्कृत भाषा में। उदन्तदलं=समाचारों का पत्र। कौबेरीं=कुबेर की, उत्तर की। जायं जायं=उत्पन्न हो हो कर। पृ० ४५ हृद्धारि=मनोहर। काष्ठां=दिशा को। पृ० ४६ विद्राव्यते=हटायी जाती है। रय०=वेग०। पृ० ५० अनुहरन्ति=अनुकरण करते हैं। अदभ्र=अधिक। पृ० ५१ हृष:=आनन्द। वियति=आकाश में। शर्म=सुख। शशविशमन०=खरगोश के नाश के भय से। पृ० ५२ गव्यूति=दो कोस समुद्घातिनी = ऊबड़ खाबड़। रजस्वलाक्षान् = मिट्टी भरे नेत्र वाले।

पृ० ५३ सून=पुष्प। पृ० ५५ महसि=तेज। समयं=मर्यादा को। पृ० ५६ मज्जाया = मेरी स्त्री। पृ० ५७ नामं नामं=झुक झुक कर। नाथामि=याचना करती हूँ। अभिनिवेश:=आग्रह। उपांशु=चुपचाप। पृ० दरस्मित=मन्दहास। उपनिषत्=ज्ञान। आमयमय=रोगमय। पृ० ५९ तपन=सूर्य। भविकाभिनिवेशिनो:=भला चाहने वाले। वलितकन्धरा=गर्दन घुमाये हुये। संवृण्वती=छिपाती हुई। समवहेल्यमाना=तिरस्कृत हुई। पृ० ६० वीजयन्तीव=पंखा करती हुई सी। निर्बन्धरुष:=क्रोध रोकने वाले। धवा:=पति लोग। किल्विषलव:=पाप का कण। पृ० ६४ अन्तरा=बीच में। पृ० ६५ श्लक्ष्ण=सूक्ष्म। कान्तास्यविधु=सुन्दरमुखचन्द्र। सरणि:=मार्ग। शोभासंहति=शोभा समूह को। वितन्वन्ति=फैलाते

हुये । पृ० ६६ केदारिकाखण्डेषु=खेत की क्यारियों में । सुम=पुष्प । पृ० ६७ चञ्चुपालि=चोंच की कोण से । करपत्राणि इव=करोत की तरह ।

पृ० ६८ अपर+अपारपारावार=पश्चिमी बड़ा समुद्र । मृत्स्ना=मिट्टी से । अनभिपद्यमानो=न प्राप्त होता हुआ । अञ्जसा=शीघ्र । सायुज्येन=मोक्ष से । जनिमही=जन्म-भूमि । पृ० ६९ कल्मषेषु=पापों में । वर्णनिपात:=ब्राह्मणादि वर्णों का पतन, तथा चादि वर्णों की निपात संज्ञा । त्रिलोचन-वती=शिवजीवाली । सदानवा=सदा नवीन, दानवों सहित । पृ० ७० शिखावला=मयूर । पौरन्दर्या=इन्द्र की । पृ० ७१ प्रालेय=बर्फ का । साप्रतिरथं=अप्रतिरथ नामक वैदिक-सूक्त-सहित । पृ० ७३ द्राघणीया=वर्धनीया । पौरुहूत्या=इन्द्रवाली आशाविलासिन्या=दिशारूपी स्त्री के । समुदश्चति=ऊपर निकलने पर । पृ० ७४ धम्मिलमतल्लिकां=श्रेष्ठ केशपाश को । पृ० ७५ व्यतिकर=संपर्क । कपोतिकापोतिका=कबूतर की बच्ची । विशीर्णपक्षति:=बिखरे हुये पंखों वाली ।

पृ०७६ अन्तकान्तिक=यमराज के पास । निरवद्यवृता=निर्दोष आचरण वाली । वल्गु=सुन्दर । पृ० ७७ निकुरम्बाणि=समूह । अभिख्यां=शोभाको । पृ० ७८ सामुद्रं=नमक । रामठं=हींग । शष्कुलीभि:=पूड़ियों से । पृ० ७९ श्रावं०=सुन सुन कर । वेपथुमती=काँपती हुई । प्रतियानं - वापस जाना । पृ० ८० तोयाधारं=सरोवर । स्वेदजुषा=पसीने से युक्त । अखर्वान्=बड़े । मन्थरितावयवा=शिथिल अंगों वाले । कदध्वानं=खराब रास्ते को । पृ० ८१ पाण्डुर=सफेद । अन्त-रेव=अंदर ही अंदर । जीवनं=जल ।

पृ० ८२ अन्तरा=विना । वर्तुलीभूय=चारों ओर

एकत्र होकर। पृ० ८३ ग्राहयित्वा=ग्रहण कराकर। अजाग्रहम्=मैंने ग्रहण किया। पृ० ८४ त्रियामायां=रात्रि में। प्रालेयनभस्वति=बर्फिली हवा। नीप=कदम्ब। पृ० ८५ समीरण=हवा। पृ० ८६ शाद्वलेषु=नये घासों पर। प्लवग=वानर। महीध्रेषु=पर्वतोंपर। सवलक्ष=श्वेत। पटली=समूह। पृ० ८७ एत्य=पहुँचकर। नाकिनः=देवता। माघवनीं=इन्द्र की। व्याघातः=आघात, इस नाम का योग। विग्रहवती=शरीरवती। यायजूकैः=यज्ञ शील। पृ० ८८ सम्भारजातं=सामान को। सहायायिनं=साथ आने वाले को। शतह्लदा=बिजली। आभोग=विस्तार। पूगपीवर=सुपारी जैसे मोटे। पृषद्भिः=बूँदों से। अकूपारेण=समुद्र।

पृ० ८९ हेषारवैः=घोडों की हिनहिनाहटों से। मन्दुराः=घुडशालायें। जीमूत=मेघ। वनावनि=वनभूमि। पृ० ९० सातयितुं=नाश करने को। शतयामां=सौ पहर वाली। पूषणि=सूर्य। पृ० ९१ सहस्रावर्त्तं=सैकडों भँवर। शात्रव=शत्रु। निषद्य=बैटकर। निर्वृति=शान्ति, सुख। सुखावगाहता=सुख से स्नान करना। पृ० ९६ प्रतुदति=सताती है। पवमान=पवन। पृ० ९७ सुरदीर्घिका=गङ्गा। शातं=सुख। साम्प्रतं=उचित। जनिसाफल्यं=जन्म की सफलता। पृ० ९९ स्तनयित्नुः=वादल। कुरंगप्लुतैः=हरिण की उछाल। पृ० १०० यादसां=जलजन्तुओं में। निलिम्पवाचः=संस्कृत भाषा का। पृ० १०१ चतुराशाः चारों दिशायें। पृ० १०२ प्रत्यभिज्ञातानिव=पहचाने हुये से। पृ० १०३ दिष्ट्या=सौभाग्य से। समे=सब। भूतलनलिनासन=भूमिके ब्रह्मा। पृ० १०४ आवृतवृतीः=पड़दा लगाये हुये। पृ० १०५ उपास्तेः=उपासना के। पृ० १०६ उपनाथितवान्=प्रार्थना की। पृ० १०७ वारुणी दिक्=पश्चिम

दिशा। पृ० १०८ धिषण=बृहस्पति। पृ० १०९ भेषु=नक्षत्रों के। धराधरधरां=पर्वतभूमि को। धाराधरं=बादल को। विनान्तरायं=निर्विघ्न। शिरस्तोद=शिर की पीडा।

पृ० ११० शैत्यप्राचुरी = शीत की अधिकता को। सिता०=मिश्री। विच्छायवदनं=उदासमुख को। पृ० १११ प्रालेयाचल० = हिमाचल०। ककुभि = दिशा में। पृ० ११६ अनिघ्नीकृताः = अविहृत हुये। पाकशासन० = इन्द्रतुल्य। नादेय=नदी का। पृ० ११५ मातरिस्वानं=वायु को। कुल्याः= छोटी नदियों को। रति०=कामदेव की स्त्री०। तनीयसि= कृश, हल्की। पृ० ११७ इन्दिरानुजाननानां=चन्द्रमुखियों के। समवसायित=समाप्त।

॥ समाप्तम् ॥



भारतसर्वकारसम्मानित-विद्यावयोवृद्ध-निखिलवाङ्मय-पारङ्गत

पद्मभूषण - शास्त्ररत्नाकर - पण्डितराज-

श्रीराजेश्वरशास्त्रि-द्रविड-महाभागानां

# शुभसम्मतिः

सोऽयं परमः प्रमोदस्य विषयो यज्जयपुरनिवासिनो हृद्य-गद्यलेखनचातुरीलब्धवर्णा महामहिमोपाध्याया विद्यावाचस्पतयः कविशिरोमणयो गद्यसम्राजः श्रीनवलकिशोरकाङ्कर-महाभागा भगवतीं निलिम्पवाणीं प्रचारयितुं प्रसारयितुञ्च गङ्गोत्तरीययात्रां व्याजीकृत्य यात्राविलासमिदं निरवद्यं गद्य-काव्यं लोकेक्षणलक्ष्यतामानेनीयिषत ।

इह हि लेखकमहोदयैः प्रासङ्गिक-नग-नगर-गिरिणदी-निर्झर–वनोपवनादीनां वर्णनेषु सन्दर्शितमात्मनः साहित्या-गमावगाहनवैदुष्यम् । क्वचित् क्वचित्तु कविबन्धु-बाण-सुबन्धु-प्रभृतीनां सुप्रथितानां गद्यकाराणां प्रकृतिसौन्दर्यवर्णनं पुरः स्फुरतीव प्रतिभाति । प्राच्यपण्डितगुम्फितेषु गद्येषु प्रायोऽनुप-लभ्यमानमृजुत्वमपीह विद्यमानं सुरसरस्वती-मन्दिरान्तः प्रवि-विक्षूणामतीवोपकारकमिति मामकीनो धारणाविलासः ··· ··· ··············। अतोऽवश्यमिदं नवीनम् अनवद्यं गद्यकाव्यं विश्व-विद्यालयादीनां पाठ्यक्रमेऽपि निर्धारणीयं तदधिकारिभिरिति पूर्णं कामयते—

**राजेश्वर शास्त्री द्रविडः**

श्री बल्लभराम शालिग्राम साङ्गवेद विद्यालयः

रामघाट, वाराणसी–१

वि. सं. २०३२ मार्गशीर्षं शुक्ले, ८ सोमे

प्राच्यार्वाच्योभयविद्यापारदृश्वनां प्रथिताभिधेयानां समालोचक-
चतुराणां नानाग्रन्थलेखकानां विद्यावयोवृद्धानां, वन्दनीयानां
आचार्य–श्रीबलदेवोपाध्यायानां

## शुभकामना

महामहिमोपाध्याय - विद्यावाचस्पति - श्रीनवलकिशोर-काङ्करलिखितं "यात्राविलासं" गद्यकाव्यं लोकं लोकमानन्द-सन्तानेन नितान्तं मोमुद्यते मे स्वान्तम् । साहित्यिकविच्छित्या विलसितस्येदृशस्य यात्रासाहित्यसम्बन्धिकाव्यस्य नवावतारोऽयं संस्कृतसाहित्यक्षेत्रे ।

सत्यं हि सैषा नव्या कृतिः कमलेव पुरुषोत्तमप्रिया, सावित्रीव सत्याश्रिता, गार्गीव परमादर्श-दर्शन-दर्शिका, नव-युवतिरिव सुवर्णालङ्कृतिरससज्जिता, विपश्चिकेव सद्ध्वनि-गुणसमुपेता च । इदं हि काव्यं मनोविनोदेन सह संस्कृतभाषा-वैदुष्यमपि वर्धयितुं प्रभवति । आङ्ग्लभाषाध्ययन-प्रवृत्तानां विद्यार्थिनां कृते तु महते उपकारायेदं बोभविष्यतीति अहमस्य काव्यस्य सर्वथा प्रचारं कामये ।

बलदेव उपाध्यायः
निदेशकचरोऽनुसन्धानविभागस्य
वाराणसेयसंस्कृतविश्वविद्यालये काश्याम्
भैरवाष्टमी, सं. २०३०

बडोदानगरस्थ एम.एस. विश्वविद्यालये संस्कृतविभागाध्यक्षाणां
प्रोफे. डाक्टर ए. एन. जानी महोदयानां

## ❀ मनोमोदानुभूतिः ❀

श्रीमतां सन्मान्यानां काङ्करमहाभागानां यात्राविलासं नाम गद्यकाव्यं समधिगत्य परमममोदत मदीयं मनः। एतेषां रस-भाववतीं वाणीं सुधाधारामिव पेयं पेयं कमप्यवर्णनीयमानन्दमनुभवामि ।

**ए० एन० जानी**
वडोदा २५।३।७४

जयपुरमहाराज-संस्कृतमहाविद्यालयस्य साहित्यविभागाध्यक्षपदात्
प्राप्तविश्रामाणां वनस्थलीय-वेदविद्यालयप्राचार्याणां
श्रीजगदीशशर्म-साहित्याचार्याणां

## हार्दिकी भावना

काङ्करोपाह्वस्य श्रीमतो नवलकिशोरमनीषिणोऽहमहमिकया विविध-विरुदावली-समालिङ्गितस्य सरसा समुत्कलिकाप्राया दृक्पथमुपयान्ती नवलतेव नवलाकृतिरियं यात्राविलासविलसिता हृदयसंवादजुषः कस्य न सचेतसः स्वान्तमश्रान्तमानन्दतुन्दिलं तन्तनीति।..........मन्ये व्युत्पित्सवोऽन्तेसदः शिक्षाशास्त्रिणो विपश्चितश्चाश्वघोषीं वाचमनुस्मारयन्त्या अस्या अनुदिनमध्ययनाध्यापनेन प्रचुरं प्रचारमाचरन्तः पाठ्यत्वेन निर्धायानुरूपकक्षमनेन सुधिया सममन्यानपि साम्प्रतिकान् साम्प्रतं समुत्साहेन समेधयन्तोऽविच्छिन्नतया प्रचलितां बाणादिवैदुषी-परम्परामक्षुण्णामारक्षयेयुरिति साम्प्रतम् ।

**जगदीश शर्मा**, साहित्याचार्यः
दि. २६।१२।७३ वेदविद्यालयः, वनस्थलीविद्यापीठम्

दिल्लीविश्वविद्यालये संस्कृतविभागाध्यक्षाणां
व्याकरणाचार्य एम. ए., एम. ओ. एल, पी-एच.डी.
प्रोफे० डा० श्री सत्यव्रतशास्त्रिणां

## हार्दिका उद्गाराः

यात्राविलासकाव्यं पाठं पाठं महान् ममानन्दः।
अतिरमणीयं मधुरं भवतां भवतापहृन्नूनम् ॥१॥
विलक्षणं काव्यमतीव हारि विचक्षणानां परितोषकारि।
प्रसादमाधुर्य - प्रभृत्युदार - नानागुणाकार - सुपुष्पधारि ॥२॥
धन्या भवन्तो विदुषां वरेण्याः कृतं यदेतद् रुचिरं भवद्भिः।
काव्यं बुधामोदकरं विचित्रं रसाप्लुतं दिव्यरसायनञ्च ॥३॥

भवद्गुणगणावर्जितहृदयः
सुरसरस्वतीसमाराधैकव्रतः
डा० सत्यव्रतः

रूपनगरम्, दिल्ली–७
२६–६–७४

हरिद्वारस्थ-गुरुकुलकांगडी-विश्वविद्यालय-पत्रिकासम्पादकानां

## मनीषाविलासः

अभिनव - नवनीत - कल्पकाव्यं
नवलकिशोर - कवीन्द्रगुम्फितं यत्।
रसिकजन - निषेवितं सहर्षं
जनयति मोदततिं शुभावहां तत् ॥१॥

सारस्वताध्वर - सुदीक्षित - पण्डितानां
गीर्वाण- गीर्विपुलवैभवसम्भृतानाम्।
श्रीकाङ्कराभिध - समुच्च - बुधाग्रणीनां
प्रह्वो भवामि नमनीय - पदाम्बुजानाम् ॥२॥

भगवद्दत्तो वेदालङ्कारः, एम.ए.
गुरुकुल कांगड़ी विश्वविद्यालयः हरिद्वारम्

# यात्राविलास-समीक्षा

डा० हरिप्रसादशास्त्री एम. ए., डी. लिट्, आगराभिजनः,
भू. पू. संस्कृतविभागाध्यक्षः, डी. ए. वी. स्नातकोत्तर-
महाविद्यालयः, कानपुरम् ।

**रुचिराश्लेषं तनुते हरति मनो तनोति रोमाञ्चम् ।**
**रमयति रमणीव नित्यं गद्यश्रीर्यात्राविलासस्य ॥**

समालोचकानां सोऽयं निर्णयः सर्वथा सत्यसम्भृतोऽस्ति यद्विमले मुकुरे नवाङ्गनायाः आननकान्तिरिव कवयितुर्लेखन-शक्तिविच्छितिः निरवद्ये गद्ये एव प्रतिफलिता जायते। पद्यं तु केनचन एकेनापि पदसौन्दर्येण तन्तनीति स्वकीयां कामपि अभिख्याम् । परं गद्यरचनायां तु मनागपि केनापि कारणेन सञ्जाते भावशैथिल्ये शब्दशैथिल्ये वा लेखकस्य प्रतिभादारिद्र्य-मेव संमुखं समायाति सर्वेषां विदुषाम् । पद्यरचनायां छन्दोबन्धन-पारतन्त्र्येण स्वच्छन्दं शब्दगुम्फनं न कवीनां कृते सरलम् । अतः पद्यात्मके काव्यलेखने छन्दोबन्धनपारवश्यव्याजेन कवीनां स्वरूपरक्षा सहसैव भवतीति सर्वविदितम् । परन्तु गद्यलेखने विद्वद्भिः स्वहृदयसम्भूताः कल्पनाभावाः प्रतिबन्धं विना स्वेच्छा-पूर्वकं प्रकटयितुं शक्याः । तेन नात्र लेखकाः केनापि व्यपदेशेन आत्मानं गोपायितुं प्रभवन्ति । अत एव कतिचन भाग्यवन्तः एव धीमन्तः प्रतिभाप्राबल्येन निरवद्यगद्यलेखने साफल्यं लभन्ते। इदमेव कारणमस्ति यत् साहित्यक्षेत्रे चिरप्रचलिता "गद्यं कवीनां निकषं वदन्ति" इति वामनाचार्यभणितिः कामपि तथ्यान्वितां विशिष्टतां कलयति ।

गद्यरचनायाः इदमेव भूयस्तरां काठिन्यं शोचं शोचमेवा-स्माकं संस्कृतसाहित्यविपश्चितः प्रारम्भतः एव सत्यपि विश-

विश्रुते सर्वविधवैदुष्यसमुत्कर्षे नातितरां गद्यसाहित्यलेखने विधृतोत्साहाः दरीदृश्यन्ते इति मन्यन्ते समालोचकाः। तस्मादेव च अङ्गुलिगणनीयाः एव गद्यकाव्यग्रन्थाः दृशं स्पृशन्ति प्रेक्षावताम्।

परं सोऽयं परमः प्रमोदविषयः यत् प्रस्तुतस्य पर्यालोचन-विषयीभूतस्य यात्राविलासस्यास्य गद्यकाव्यस्य सफललेखकाः म० म० श्रीनवलकिशोरकाङ्करमहाभागाः सत्यपि गद्यकाव्य-लेखनकाठिन्ये काव्यमिदं विलिख्य प्रस्तूय च अ० भा० प्रौढ-संस्कृत–गद्यलेखन–प्रतियोगितायां प्रथमं स्थानं लब्धवन्तः, "गद्यसम्राट्" इत्युपाधिश्च अलप्सत। सोऽयं नाल्पस्य वैदुष्यस्य परिणामः।

अत्र गद्यसम्राजा गङ्गोत्तरीयां यात्रां व्याजीकृत्य पुर-नगर-ग्रामाणां गिरिणदीनदनिर्झराणाम् अधित्यकोपत्यकाहिम-शिखराणाम्, आधुनिक-नवसंस्कृति-संस्कृतानां युवकानां युव-तीनां, निदाघ-प्रावृट्प्रभृतीनाम् ऋतूनां च निरवद्येन साहित्यिक-गद्येन वर्णनमतानि। संक्षिप्तमपि कथानकं लेखकमहोदयः स्व-लेखनीकौशलेन तादृशं सौन्दर्य–संवलितं व्यतीतनत् यदानन्द-महानदे निमज्जन्तः सन्तः काममप्यमन्दां मुदं लभन्ते काव्यं चेदं पूर्णं पठित्वैव विरमन्ति।

संस्कृतसाहित्ये साम्प्रतं समुपवर्त्तमानेषु नूतनतमेषु गद्यकाव्येषु साहित्यिकविच्छित्तिविच्छुरितमिदं यात्राविलासं प्रमुखतां भजते। यतो यात्रासाहित्यस्य यादृशमिह सहृदयलोक-लोचनासेचकं रचनाचातुर्यं चकास्ति न तादृशमन्यत्र सहसा सुलभम्। अत्र हि लेखकस्य वस्तुवर्णनवैदग्ध्यं, मानवभावप्रद-र्शननैपुण्यं, पशुपक्षिणां स्वाभाविकं चित्रणचातुर्यं, प्रकृतेः प्राकृतिकं पर्यवेक्षणकौशलं च किमप्यद्भुतं काव्यानन्दं वितनुते।

वस्तुतोऽत्र पदे पदे पुरनगर-ग्राम-ग्रामटिकादीनां कोमलकान्त-वचनोपन्यासैः स्वैरविहारिणी मनोहारिणी वर्णनपद्धतिः लेख-कस्य विशिष्टां प्रतिभां प्रकटयति। कविप्रतिभाप्रौढोक्तिशक्ति-समुपस्थापितानि सुदिशदानि विभिन्नदृश्यवर्णनानि हठाच्चेतो हरन्ति च।

अद्भुतमत्रोत्प्रेक्षणं, श्लेषवर्णनमपि विलक्षणं, उपमा-प्रयोगोऽप्यनुपमः परमः, रूपकोऽप्यप्रतिरूपकः, परिसङ्ख्यापि सङ्ख्यावतां कृते सौख्यदा चेत्यलङ्कारप्रयोगोऽप्यत्र मणिकाञ्चन-योग इव विराजते। सर्वत्रैव प्रसङ्गानुकूलो वचनोपन्यासः कामिनीवाग्विलासविन्यासः इव मानसं रञ्जयति। यत्र तत्र तु गद्यमपि पद्यायते।

लेखकस्यास्य नवनवशब्दरत्नानामपारः कोऽपि भाण्डा-गारः, अद्भुतश्च गीर्वाणभाषाधिकारः। नैव कुत्रापि अर्थानु-सन्धानं पृष्ठतो निधाय केवलं शब्दाडम्बरः संमुखं समायाति। उत्तरोत्तरमिह अनपचीयमानैव बहीयसी काव्यसम्पत्तिः प्राप्यते। क्वचित् क्वचिद् अप्रसिद्धानां वैयाकरण-प्रयोगानां बाहुल्येन क्लिष्टत्वेन श्लिष्यन्ती अपि शब्दार्थोभयसौष्ठवशालिनी खल्वस्य शैली चेतोहारिणी एव वर्त्तते चेतस्विनाम्। न कुत्रापि अर्थ-सौकुमार्यं तादृशैः शब्दैः विघ्नभूतैर्भूयते।

अयमस्त्यपरो यात्राविलासे नरीनृत्यमानो विशिष्टो गुणो यदत्र कुशललेखकस्य सफलां लेखनीमधिश्रित्य अप्रसिद्धा-क्लिष्टार्थाः अपि ते ते विशिष्टाः शब्दाः प्रसङ्गानुकूलप्रयोगत्वेन भाषासौन्दर्यवर्धका एव सञ्जाताः। यत्र तत्र श्लेषादिबाहुल्ये ते टिप्पण्या सारल्यमापादिताः सम्पादकप्रवरेण।

अत्र हि विद्यार्थिनां मिथो वार्त्तालापविधौ व्युत्पत्तिसंवर्ध-कानि व्यक्तार्थानि सरलातिसरलानि वाक्यान्यप्यनल्पानि उप-

लभ्यन्ते। तेन गद्ये चेतस्विचित्तचुम्बिनी कापि चारुता चतुर्गुणीभूता विलसति।

कोमलकान्तपदावली-विलसितत्वं च भाषायाः इह अन्यतमं वैशिष्ट्यम्। कतिचन तादृशानि वाक्यानि यथा—"सरस-किसलय-लता-लास्येषु, मधुमदकल-मधुर-मधुकर-निकर-मञ्जु-गुञ्जनेषु, सस्यस्थलीपालिकानां वरबालिकानां करतालिकानां (पृ० १२), निर्जगाम नितम्बालस-गामिनी कामिनीव यामिनी (पृ० १४) इत्यादि। स्त्री-पुरुषाणां विभिन्न-दशासु स्वरूपचित्रणेऽपि परमं प्रावीण्यं विलोक्यते लेखकस्य। "देहल्यां स्त्रीजनः, देहल्यां पुरुषाः, हरिद्वारे गङ्गातटम्, गङ्गातटे स्त्रीणां स्नानविहारः, पर्वतीयाः स्त्रियः"—इत्यादिप्रसङ्गेषु तदिदं प्रावीण्यं पुरतो नरीनृत्यमानमिव दरीदृश्यते प्रतिपदम्"। पाश्चात्त्यविपश्चित् 'वर्डसवर्थः इवास्यापि लेखको लोके जडतया गृह्यमाणां प्रकृतिसुन्दरीं चैतन्यमयीमेव पश्यति। अपूर्वं नन्वत्र जडचेतनप्रकृति-पर्यवेक्षणं वीक्ष्यते। मार्गवर्णनं, प्रातर्यमुनावर्णनं, देहलीभ्रमणं, हरिद्वारवर्णनं, हृषीकेशसुषमा, नीलकण्ठगिरौ निर्झरः, पर्वतीयमार्गदृश्यानि, सरोवरः, गङ्गोत्तरीयमार्गरामणीयकम्—इत्यादीनि प्राकृतिकदृश्यवर्णनानि कस्य वा सचेतसश्चेतसि काव्यामोदसुधाधारां न सिञ्चन्ति। "किशोरी-कष्टदशा" कं वा सदयहृदयं न द्रावयति, पत्न्याः मूर्च्छायाः चित्रणं च कं न वा पाषाणहृदयमपि रोदयति।

"पत्नीकृतः अनुतापः, पत्नीकृतं क्षमायाचनम्, हृषीकेशे स्वास्थ्य-विकृतिः, इत्यादिषु प्रकरणेषु साम्प्रतमपि सतीधर्मः साक्षादिव भारते विराजमानो दृष्टिपथम् उपयाति। "पत्नी-परामर्शः, पत्नीकृतः पदयात्रानुरोधः, पत्न्यवबोधनम् गङ्गोत्तरीयस्थलमुपेत्य पत्न्याः प्रसन्नता" इत्यादिशीर्षकानुपातीनि

अनवद्यानि हृद्यानि वर्णनानि भारतीयदम्पत्योः वास्तविकं गार्हस्थ्यजीवनस्वरूपं निर्दिशन्ति च ।

काव्यस्यास्य लेखकमहाभागः यथा साहित्ये शब्दशास्त्रे च पारगामितां भजते तथा दर्शनविमर्शनमार्गेऽपि अयमस्खलद्-गतिरेवेति सिद्धसाधोः प्रवचनप्रकरणे प्रत्यक्षं जायते । अत्र हि ब्रह्मविष्णुमहेश्वरादिदेवत्रयस्यैकान्तैक्यं दार्शनिकदृष्ट्या प्रदिष्टं लेखकेन ।

यद्यपि यत्र तत्र मुद्रणयन्त्रालयसम्बन्धिनी साधारण-त्रुटिरवश्यं तुदति चेतः किन्तु 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इति महाकविकालिदासोक्त्या न सा क्वाचित्की अक्षरच्युतिः काव्यसौन्दर्यविघातिनीति । अथान्ते इदमेवाभिलष्यते मया—

कविशिरोमणिकाङ्कराः, सर्वसुखैर्विलसन्तु ।
कुर्वाणा रचना नवाः, शुभ्रयशस्तन्वन्तु ॥१॥
नवलकिशोरकाङ्करकविः, गद्यसम्राट् मतिमान् ।
ब्रह्मायुष्ट्वं प्रयच्छतु, सुविदुषेऽस्मै भगवान् ॥२॥



# यात्राविलास-पर्यालोचनम्

**ले० पं० श्री चण्डीप्रसादो दाधिमथः, व्याकरणाचार्यः**
व्याकरणविभागाध्यक्षः, महाराज-संस्कृत-कालेजः, जयपुरम्

..................वैदिककालादारभ्यैव निलिम्पवाण्यां गद्य-बाहुल्यमिति न तिरोहितं विपश्चिताम् । परं तल्लेखने या शैली बाण-सुबन्धु-प्रभृतिभिराहृताऽऽसीत्तस्याः परिपालने गद्यं किमप्य-निर्वचनीयं जायते एव । एतादृशस्य गद्यस्य लेखनं राजस्थानीय

विदुषो यात्राविलासाख्य-काव्यसर्जनकर्मणि प्रवृत्तिर्जातेति महतः प्रमोदस्यावसरः। द्वित्रान् विहाय सम्प्रति न सन्ति राजस्थाने लेखका न वा कवयश्च ........।

एतादृशे युगे प्राक्तनवैदुष्यचणा महामान्याः श्रीनवलकिशोरकाङ्करमहाभागा नितरां प्रशंसनीयाः। यैर्हि यात्राविलासाख्यं गद्यकाव्यं व्यरचि। एतेषां महाभागानां नात्र परिचयः समपेक्ष्यते। यतो हि एते अनन्यलभ्येन पाण्डित्येन, सदाचारपूतेन समाचरणेन, सरलेन स्वभावेन च सर्वथा विश्रुताः सन्ति। साहित्यसेवायामेतेषां मूकप्रवृत्तिमवलोक्य कस्य सचेतसः प्रसन्नता न जाजायते। अन्येषां विदुषां कृते प्रेरकमिदं कार्यं काङ्करमहाभागानाम् ........।

अत्र हि यात्राविलासे विदुषा लेखकेन विशिष्टयात्राया वर्णनं चित्रितमिति अन्वर्थकमिदम्। अस्य कतिपयप्रसङ्गास्तु कादम्बरीकल्पा नूनं परिश्लाघनीया एव। पत्न्या मूर्च्छनायां पदानां लालित्यं दण्डिनं स्मारयति। सिद्धसाधोरुपदेशप्रवचनादिकश्चात्र लेखकस्य शास्त्रीयं वैदुष्यं द्योतयति।........अन्यच्च च्युतिसंस्कृतिदोषस्यापि निराकरणं महत्या सूक्ष्मेक्षिकया विहितमिति महतः प्रमोदस्यावसरः। यतो हि तादृशं स्खलनं तु अद्य साम्प्रतिकानां स्वाभाविकमेव जातं दरीदृश्यते। अथ च यथा कादम्बर्यां बाणभट्टेन स्थाने स्थाने तादृशकृदन्तान्तप्रत्ययानां प्रयोगः सचातुर्यमक्रियत तथा अनेनापि महाविदुषा तादृशी सरणिः सर्वथा निर्व्यूढा, सहैव अलङ्काराणां प्रयोगोऽपि तथाविध एव विहितः........।

राजस्थानविश्वविद्यालयेन काव्यस्यास्य शास्त्रिपरीक्षायाम् एम. ए. परीक्षायाञ्च पाठ्यपुस्तकरूपेण सन्निवेशोऽक्रियतेति ज्ञायं ज्ञायं प्रमोमुदीति मामकीना चित्तवृत्तिः।........

—०—

# यात्राविलास-परीक्षणम्

डा० श्री भोलाशङ्करव्यासः एम. ए., डी. लिट्.

वाराणसेय-हिन्दूविश्वविद्यालये समुच्चप्राध्यापकः, वाराणसी

सुरभारती-लीलालहरी-समुच्छलित-चारुचर्वणा-चर्चितं श्रीमन्नवलकिशोरकाङ्कर-गुम्फितं चञ्चच्चारु-चमत्कृति-विलसितं 'यात्राविलासं' नाम लास्यमिव सुविलासं गद्यकाव्यं दर्शं दर्शं बोभवीति परमानन्द-सन्दोहान्दोलितं चेतः। सत्स्वपि रुचिररुचिरेषु वर्णनासम्पत्-सम्भृतेषु उपमारूपकादिविच्छित्तिभास्वरेषु शृङ्गारादिरस-प्रोच्छलत्-पिच्छिलेषु ध्वन्यध्वनीनेषु रमणीरामणीयकमिव रमणीयेषु, चित्रपटेषु इव दर्शनीयेषु अनेकेषु गद्यकाव्येषु नवीनोऽयं यात्राविलासाभिधः गद्यकाव्यप्रबन्धोऽद्भुतामभिनवामेव काव्यश्रियमुद्वहन् नवनवोन्मेषशालिन्या लेखनपरिपाट्या प्रत्यग्रेण पदचयेन च साहित्योपनिषज्जुषां विदुषां कामपि विशिष्टां परितुष्टिमुत्पादयतीति नास्ति संशयलवः। अस्मिन् किल भवभूतेरिव कविशिरोमणेः काङ्करस्य भारती क्वचित् स्निग्धश्यामं, क्वचिद् भीषणाभोगरूक्षं प्राकृतिकशोभावैभवं, क्वचिच्च पत्युः स्वास्थ्य-विकृतौ पत्न्याश्चिन्ताक्रन्दनं, क्वचिदथ पत्न्याः मूर्च्छायां पत्युर्विलपनं सहृदयानां पुरः मूर्त्तिमन्तं करुणरसमेवोपस्थापयति। एकत्र परमपिनद्ध-नितम्बमण्डलाभोगानां नखरञ्जनी-रञ्जित-नखराणां प्रखरयौवनोद्दाम-ज्वालामाला-दन्दह्यमान-कामिजन-शलभानां नागरिकयुवतीनां चित्रणं चेतश्चोरयति, अपरत्र च शरीरार्धवृतोत्तरीयांशुकानां परिश्लथाङ्गीनां श्रममपनोदयन्तीनां श्रमिककान्तानां ग्रामललनानां स्वाभाविकं स्वरूपवर्णनं सुमनसां मनांसि मोदयति। वस्तुतोऽत्र स्थाने स्थाने प्रतिपदं निसर्गमधुरां

शोभनां काव्यविच्छित्तिविभूतिं, श्रद्धाभावसमन्वितं भक्ति-माधुर्यञ्च विकिरन्ती कविभारती द्रागेव सर्वेषां मनो-हरति। प्रसादमधुराऽपि निविडश्लेषाश्लिष्टा विचित्रां पदसन्ततिं निक्षि-पन्ती, भावुकमनःसु भावाकुलतया विशिष्टं रागसंमर्दमुत्पादयन्ती, विभिन्नदृश्यानि चित्राणीव प्रत्यक्षं स्थापयन्ती, यमकानुप्रास-पेशलतां सङ्गीतसंवलिताञ्च युगपदेवानयन्ती कविकारुवर-तूलिका श्लाघ्यतरा न केषां सहृदयजुषां विदुषाम्।

कविशिरोमणेः रचनैषा पदरचनाप्रौढिं साहित्य-व्याकरण-दर्शनादिशास्त्रवैदुषीञ्चेदृशीं प्रकटयति यां सततसाहित्योपनिष-त्परिशीलन-परिस्फुरन्मेधावन्तः सन्तः, समधीतसम्यग्व्याकरण-ग्रन्था विद्वांसः, दार्शनिकसंसरणि-संसरण-विचक्षणधौरेया एव च पाठकाः कृतिविच्छित्तिं हृदयान्तः स्थापयितुं प्रभवन्ति, न पुनः पल्लवग्राहिपाण्डित्या मिथ्याभिमानिनो मानवाः। कविरथं तत्तच्छास्त्रजुषां विदुषां कृते स्वानुभूतां कामपि पाण्डित्यमण्डितां शास्त्रीयरचनामिह प्रतिपादितवान्। सिद्धसाधोः प्रवचनमत्र प्रमाणम्। षोडशकलस्य परमात्मनस्त्रिपुरुषरूपत्ववर्णनं ब्रह्म-विष्णुमहेशानाञ्चैकस्यैवेश्वरस्य स्वरूपाख्यानं दर्शनशास्त्रेषु कृतश्रमा एव विद्वांसः केवलं स्वात्मसात् कर्त्तुं समर्थाः सन्ति। कृतिरियं खलखेलन-परिखण्डिता मा भूदिति तत्र तत्र विशिष्टाः क्लिष्टाः शब्दाः शब्दानुशासनसिद्धाश्च दुरूहप्रयोगाः अपि काङ्कर-महाभागेन अक्रृषत। परं टिप्पण्यां **डा० श्रीनारायण-शास्त्रिकाङ्करेण** सर्वमिदं काठिन्यं दूरीकृत्य गद्यकाव्यमिदं सहजगम्यमक्रियतेति महतः प्रमोदस्यावसरः। अन्ते कठिन-शब्दानामर्था अपि अलिख्यन्तेत्यपि सारल्यसम्पादने पर्याप्तम्।

काव्यस्यास्यानुशीलनेन न केवलं मानवजीवनस्य विभिन्न-स्वरूपाणां, ... गौरीगुरोरेव च मनोज्ञा

छविर्दर्शनीया भवति, अपितु संस्कृतरम्योद्यानप्रविविक्षूणां कृते गीर्वाणवाणीवैदुष्योपलब्धिरपि सहजसुलभा भवतीत्यत्रापि कृतं सन्देहेन। सुरभारतीं भारतीव्रां मन्वानेष्वाधुनिकेषु पण्डितेषु साम्प्रतमपि श्रीकाङ्करसदृशाः बाण-सुबन्धुनिर्दिष्टगद्यसरणौ सलीलं सञ्चरणशीलाः कविमहोदया वर्त्तन्ते इत्यमन्दानन्द-सन्तोष-कन्दलिता मदीया मनोभूमिः। अथ पद्यानि—

रम्यालङ्कृति-झङ्कृति-द्युतिमती सद्यो मनोहारिणी
शय्यामाप्नुवती सखीव सततं मोदाङ्कुरोल्लासिनी।
निर्दुष्टां भणितिं मुदा विदधती कर्णे क्वणन्ती प्रियं
श्रीमत्काङ्कर-कोविदस्य रचना सेयं विजेजीयताम् ॥१॥

अभिनव–कमनीय–गद्यकाव्यं
नवलकिशोरबुधेन निर्मितं यत्।
सहृदय-हृदयेषु राजतां तद्
गुणनिविडा रसनिर्भरेव माला ॥२॥

यात्राविलासमिदमद्भुत–काव्यरत्नं
बाणादि-गद्यकवि-रीति-सृतिं भजद्वै।
प्रौढिं स्पृशच्च बुधवृन्दमनांसि सम्य-
गावर्जयद् विजयतामिति मेऽभिलाषः ॥३॥

---

## यात्राविलासावलोकनम्

लें० राष्ट्रपति-सम्मानितः बहुविधभाषाविद्वान्, संवित्-सम्पादकः
**आचार्यः श्रीभाईशङ्करपुरोहितः**
श्रीमुम्बादेवीसंस्कृतमहाविद्यालये प्रधानाचार्यः, भारतीयविद्याभवनं बंबई

अवालोकयमहं 'यात्राविलासं' नाम रमणीयं गद्यकाव्यम्। संस्कृतसाहित्ये प्राचीनैरक्षुण्णां पन्थानमधिकृत्योत्तरभारतस्य

तत्तत्प्रदेशस्य स्थलविशेषाणाञ्च ललितया मृद्वीमधुरया च गिरा परिचायकं सरसं वर्णनमत्र गद्यकाव्ये वर्त्तते । अस्य रचयितारः सरस्वतीप्रियपुत्राः कविशिरोमणयः श्रीनवलकिशोरकाङ्करमहाभागा मधुरभाषारचनाभिः पूर्वमेव सुप्रथिताः संस्कृतरसिकेषु लोकेषु । बाणस्य दण्डिनो वा शैलीं स्मारयन्ती तेषां वाग्झरी पुनः पुनः पठनलालसं करोति सचेतसश्चेतः । अत्र प्राचीनानां प्रौढिर्नवीनानाञ्च सरलता सङ्गच्छेते । रचनेयं विषयस्य सर्वजनप्रियत्वात् भाषायाश्च श्लक्ष्णतया चेतोहरत्वाच्च सविशेषं कामनीयकं भजते । यथा—निदाघप्रसारः, यमुनावर्णनम्, देहलीभ्रमणम्, हरिद्वारे गङ्गातटम्, किशोरीदर्शनम्, पर्वतीयाः स्त्रियः, पत्न्या मूर्च्छना, प्रातस्तुषारपातः—इत्यादयः सन्दर्भाः स्वाभाविकीं कमनीयां पदावलिं, सहजालङ्कारचमत्कृतिं, विपुलां भावचितिञ्च वितन्वन्तश्चेतश्चमत्कुर्वन्ति । उत्प्रेक्षाशोभासाहिती त्वत्र दर्शनीया—"तदानीं रात्रिजागरिति-हृदयार्त्तिं प्रशमयितुमिव, नैदाघीं व्याधिविकृतिं सान्त्वयितुमिव, यमुनायां यामिनीपापानि प्रक्षालयितुमिव वा निस्तन्द्र–सुन्दर–नवेन्दीवर–तिरस्करणेक्षमेक्षणाः कालिन्दीजलकान्ति-कान्त-कुन्तलोत्तमाङ्गाः" (पृ. १४) । अत्र श्लेषोपमासौन्दर्यमपि मनो हरति । यथा—"सावित्रीव सत्याश्रिता, मैत्रेयीव परमादर्श-दर्शन-सम्भृता, यशोधरेव सर्वज्ञसंमता, रोहिणीव द्विजपतिप्रीणिता, लक्ष्मीरिव पुरुषोत्तमाधिगता, सुमनोमनोवृत्तिरिव सत्कर्मसङ्गता कविकृतिरिव च शुद्धवर्णध्वनिगुञ्जिता" (पृ. २४) । ईदृग्विधानि नाना स्थलानि वर्त्तन्तेऽत्र । एवं श्रीकाङ्करमहाभागानां गद्यकाव्यरत्नमिदं पाण्डित्यस्य रसिकताया जनमनोवित्त्वस्य च साधु परिचायकं विद्यते ..........।

संस्कृत[illegible]पि गुणगरिष्ठा रचनाः प्रकाश्यन्ते—

इत्येव मादृशस्य सुरभारतीप्रणयिनः परमतोषाय भवति, तत्रापि भाषान्तररचना इव सहजालङ्कारसम्भृताः सहजगम्या मधुरा गद्यरचनास्तु नितरां प्रसादकारिण्यो जायन्त एव। एतादृशीनां रसपूर्णानां कृतीनां भूयो भूय आस्वादनेन संस्कृतभाषा-पाटव-मभिलषतां महानुपकारो भवतीति विश्वसन्नस्या रचनायाः पूर्णं प्रसारं प्रार्थये। श्रीकाङ्करशास्त्रिणश्चेमे गीर्वाणवाणीसेवार्थं सुचिरं दृढाङ्गा रचनापराश्च भूयासुरित्याशास्यते।

## यात्राविलासे समीक्षात्मिका दृष्टिः

**श्रीशिवसागरत्रिपाठी एम. ए., साहित्याचार्यः**
राजस्थान-विश्वविद्यालये संस्कृत-प्राध्यापकः

यात्राविलासनामके गद्यकाव्येऽस्य लेखकमहोदयेन कवि-शिरोमणि-श्रीनवलकिशोरकाङ्करमहाभागेन याऽत्र ललितपद-गुम्फनेन, गुणत्रयविन्यासेन विविधालङ्कारसंयोजनेन भाषा-स्वारस्येन चात्मनः परमाद्भुता वर्णनशक्तिः प्रदर्शिता साऽतीव प्रशस्या अनुकरणीया च।

यद्यपीदं वाण-सुबन्धु-प्रभृति-प्रौढगद्यकाराणां पद्धति-मनुसृत्य महता पाण्डित्येन लिखितं येन श्लेषादिजटिलं जातं, सहैव व्याकरणस्य विशिष्टप्रयोगैरपि न साधारणजनसुबोधं,परन्तु साम्प्रतिकी सरला शैली अपि अत्र प्रचुरतया प्राप्यते एव। यथा स्टेशनाभिधस्थानवर्णने — "त्वरितगमन ! पश्य पश्य कथं विस्मरसि पेटिकां बहिरेव, गमनोन्मत्त ! कथमग्रे प्रयासि महिलामपि न पश्यसि ? यौवनान्ध ! मां पादेन किं प्रहरसि ? रे नेत्रहीन ! कुतः समागच्छसि शिरस्येव ........ भद्रमानुष ! अन्यत्र स्थानं मार्गय नात्र आगमनायापि मार्गः, रे स्थविरे !

किं चेलाञ्चलं पातयसि मे स्तनन्धये तनये (पृ. १०)……"हन्त भारते अस्मत्सदृशीनां कन्यानां जन्मैव पित्रोः कष्टकारणम्। कन्याजन्म आकर्ण्यैव हृदयं विदीर्यते, मस्तकं घूर्णते, जगदखिलं शून्यमिव प्रतीयते, चरणतलाच्च भूमिः स्खलितेव ज्ञायते …… गेहे मार्जार्याः कुक्कुर्याः कुरङ्ग्याश्छाग्याः शुक्या वा मृत्यौ हृदयमुद्विजते परं कन्यामरणे तु … चेतः वैशद्यमनुभवतीति पशुपक्षिभ्योऽपि हीनं जीवनं कन्यानाम् (पृ.४१)। "सा तु पित्रा युवकाय निष्कलाय वा, धनिकाय निर्धनाय वा, कुलीनाय अकुलीनाय वा, विज्ञाय अज्ञाय वा, कुब्जाय खञ्जाय वा, काणाय बधिराय वा, भोगिने रोगिणे वा यस्मै कस्मैचिदपि दीयते" ( पृ. ४२ )। बहुकुतूहलाकलितः खलु…पदातिमार्गः। चरण-सञ्चलने कीदृशः आनन्दः, कीदृशं स्वाच्छन्द्यं, कीदृशी च प्रतिदिनं नव-नवस्थानावलोकितिः ? (पृ. ५६)। "अस्यां स्थितौ कुत्र शान्तिः, कथं शान्तिः कीदृशी च शान्तिः ? … इदानीं तु नाभिनन्दनीया अभिनन्द्यन्ते, न पूजनीयाः पूज्यन्ते, न सम्माननीयाः सम्मान्यन्ते, न पितरौ समाद्रियेते, न शासकानामनुशासनं सुसेव्यते, न स्वीया संस्कृतिः स्वीक्रियते…… अद्य तु यत् किमपि मनसि समुदेति तदेव प्रलप्यते, यत् किमपि स्वबुद्धौ परिस्फुरति तदेव समाचर्यते……। सर्वत्र नेश्वरे विश्वासः, न गुरुषु गुरुभावः, न च शास्त्रेषु श्रद्धाभाव एव (पृ. १०५)। इत्यादयो बहवः प्रसङ्गा अत्र काव्यस्यास्य सारल्यमपि द्योतयन्ति।

अन्यच्चेदं काव्यं प्रतिपदं विषमस्थले डा० नारायणशास्त्रिकाङ्करप्रदत्तया टिप्पण्या तु सर्वथा सरलतां गतम् उपयोगिता चास्य प्रवर्धिता। नैव पाठकाः काठिन्यमनुभवन्ति टिप्पणीमाश्रित्येति दृढं विश्वसिमि।

काव्येऽस्मिन् प्रकृतिचित्रणं, [illegible] याथातथ्यवर्णनं,

युवक-युवतीनां च सहजसौन्दर्यचित्रणं भावोल्लेखनञ्चापूर्वं विद्यते। एवं यदि गद्यं कवीनां निकषं वदन्तीति सत्यं तर्हि तत्रभवन्तः काङ्करमहाशयास्तन्निकषोपले निःसंशयं विशुद्धा एव। अतः इमे हृदा सबहुमानं धन्यवादार्पणैः संमान्यन्ते।

परमिदमपि नाप्रासङ्गिकं, यदिदानीं प्रौढपाण्डित्यह्रास-काले संस्कृतभाषायाः सरलीकरणम् आवश्यकम्। एतदर्थं च क्लिष्टसन्धि–लम्बसमास–दुरूहप्रत्ययादिप्रयोगकरणं नैव आवश्यकम्। एवं कृते हि संस्कृतभाषा प्रचारं प्रसारं च प्राप्य जन-हितकारिणी भविष्यति। सम्प्रति श्रीकाङ्करमहाभागानां सैषा बाणसुबन्धुशैली एतेषां प्रौढपाण्डित्यमवश्यं प्रदर्शयति परमियं न सामान्यजनसुलभा प्रतीयते। किन्त्वत्रापि नास्ति संशयः यद-नुपमा गद्यश्रीरियं संस्कृतगद्यविधासमृद्धौ यात्रासाहित्याभाव-पूर्त्तौ च नितरां स्वयोगदानं करिष्यति।

—: ※ :—

## यात्राविलासपरिचयः

**डा० के. रा. जोशी एम. ए., पी-एच-डी., साहित्याचार्यः**

संस्कृतभवितव्य–सम्पादकः, नागपुरम्

…'गद्यं कवीनां निकषं वदन्ति' इति सुप्रसिद्धं वचनं…। दण्डि–सुबन्धु–बाणभट्टानां नामानि गद्यकाव्यरचयितृषु सर्व-मूर्धन्यानीति अद्यापि जनाः स्मरन्ति।………सम्प्रति तदनु-सारिणीमेव प्रौढशैलीं बिभ्रत् 'यात्राविलासं' समुपन्यस्यता श्रीनवलकिशोरकाङ्करमहाभागेन 'बाण' परम्पराप्रियाणां कृते मनोहरं गद्यरचनाचातुर्यं सविलासं प्रदर्शितम्। अतएव अखिल-भारतीय-प्रौढ-संस्कृत-गद्यलेखन-प्रतियोगितायां गद्यकाव्यमिदं सर्वश्रेष्ठमिति ससंमानं गुणगृह्यैः परीक्षकैः स्वीकृतम्। तदनु

गुणेन 'गद्यसम्राट्' इत्युपाधिना यथार्थतया समर्चितस्तिष्ठति श्रीमान् आचार्य-नवलकिशोर-काङ्करः ।

अत्र काव्ये गङ्गोत्तरीययात्रां निमित्तीकृत्य पत्न्या सह स्वीकृतप्रवासेन कविना सानुभवं यात्रावर्णनं हृद्येन गद्येन विततम् । अत्र…… विलक्षणशेमुषीकोऽयं लेखकः प्रतिभाति ……। बाणादिशैलीं समाश्रयता श्रीमता कविना बहुशः वैयाकरण-मात्रबोध्या अपि प्रयोगाः कृताः सन्ति । लेखकवर्येणात्र श्रीबाण-भट्टः सम्यग् उपासितः आत्मसात् च कृतः । श्लेषानुप्राणिताः उपमाः, परिसंख्या, विरोधाभासः, श्लेषः इत्यादयः अलङ्काराः स्थाने स्थाने प्रयुक्ताः शोभन्ते । यथा देहलीवर्णनम्, देहल्यां पुरुषाः, हरिद्वारवर्णनम्, उत्तरकाशीवर्णनम्—इत्यादीनि कानि कानि स्थलानि उदाहरामः……।

संस्कृतवाचि आधुनिक-विषय-वर्णने अनुकूलशब्दयोजनायां कीदृक् सामर्थ्यं तिष्ठतीति यदि आलोचनीयं तर्हि 'यात्रा-विलासम्' अवश्यं तैः पठितव्यम् । परम्परया प्राप्तविद्याः विद्वांसः अपि कथं नाम हृदयभावान् साधु आविष्कुर्वन्ति कथं च प्रत्यक्ष-वत् वर्णना-नैपुण्येन प्रसङ्गान् उपन्यस्यन्ति इति द्रष्टुं देहली-भ्रमणं, हरिद्वारवर्णनं, गङ्गातीरे स्त्रीणां स्नानं, किशोरीदर्शनं, पत्न्याः मूर्च्छना—इत्यादीनि वर्णनानि अवश्यं पठनीयानि सन्ति……।

आधुनिके काले सरससरसं प्रौढं गद्यं सुदुर्लभम् इति विश्वविद्यालयानां पाठ्यक्रमे पठितव्येषु ग्रन्थेषु दण्डि-बाणभट्टा-दीनामेव कतिपयान् अंशान् प्रायः निर्धारयन्ति । यात्राविलासेन तद्दिशि गुणगौरवार्जितं पदम्। अतः तत्पाठनक्रमो विदुषां विचार-विषयो भवतु । पाठ्यक्रमेऽस्य निर्धारणेन संस्कृतच्छात्राणां गुण-सम्पन्नस्य नवगद्यस्य परिचयः स्यात् । अपि च आचार्यश्रीनवल-

किशोरकाङ्करैः कष्टार्जितं धनं व्ययीकृत्य साधिता सुरभारती-सेवा संमानिता भवेत्…… । ओजोबहुलं गद्यं भवतीति समास-भूयस्तया नैकविधप्रयोगपरिपाट्या यत् किञ्चित् साधारण-जन-दुर्वोधत्वं यात्राविलासे दृश्यते तत् सर्वं डा० नारायणशास्त्रि-काङ्करेण सुप्रथिताभिधेयेन तत्तनयेन टिप्पण्यादिभिः दूरी-कृतम्……।

यात्राविलासं सुमुद्रितं शुद्धं चेति नयनमनोहरं किमपि रसिकमनोविनोदनं तिष्ठति । महामहिमोपाध्यायम् आचार्य—श्रीनवलकिशोरकाङ्करं वयं धन्यवादशतैः सभाजयामः ।……तैः इतोऽप्यग्रे अवश्यं सुरभारती सेवितव्या इति स्नेहेन प्रार्थयामहे।

—: ❋ :—

## यात्राविलासे भावाभिव्यक्तिः

**डा० गोपालचन्द्रमिश्रः, एम. ए., पी-एच. डी.**
वेद—धर्मशास्त्र—मीमांसाचार्यः
वाराणसेय—संस्कृतविश्वविद्यालये प्रोफेसरो वेदविभागाध्यक्षश्च, वाराणसी

विबुधो नवलकिशोरः संस्कृतगद्ये पटुर्जयति ।
येन स्मृता पुराणी विस्मृतवाणी कवेर्निकषा ॥१॥
मान्यैः काङ्करवर्यैः सन्दृब्धं गद्यकाव्यमेतद्धि ।
मस्तकमणितां यातं साम्प्रतिकानां गद्यकाव्यानाम् ॥२॥
धन्योऽयं कविराजो, धन्यास्य वाणस्पर्धिनी शैली ।
प्रतिपदमद्भुतभावैः सहसा या सतां मनो हरति ॥३॥
सम्प्रति युगे ह्यनेके भावावेषाः कलाश्चरित्राणि ।
संस्कृतयो वादा ये तेषामिह चित्रणं विहितम् ॥४॥
दर्शन—विषय—विमर्शः सिद्धसाधोर्यः प्रवचने जातः ।
सोऽयं काव्यप्रणेतुः प्रदर्शयति शास्त्र—वैदुष्यम् ॥५॥

यात्रारम्भ-विचारे कुटुम्बविवरणं गद्यसम्राजः ।
मिलति केनापि मिषेण लेखक-पत्नी-परामर्शे ॥६॥
कोमलगात्र-किशोर्या गाथा भारतीयकुलकन्यानाम् ।
हन्त पुरो विबुधानां स्थापयति समाज-दुरवस्थाम् ॥७॥
गङ्गाकूले सायं नवतरुणीनाञ्च नव्य-पुरुषाणाम् ।
स्नानविहारं पाठं पाठं मे मुद्यते मनसा ॥८॥
स्थाने स्थाने कविना बहवो धातु-क्रिया-प्रयोगास्तु ।
तादृशा अपि प्रयुक्ता वैयाकरणैकगम्या ये ॥९॥
किन्तु प्रसिद्धविदुषा सम्पादकेन कवितनयेन ।
टिप्पणीमलं विलिख्य सारल्यं स्थापितं नूनम् ॥१०॥
अन्ते तथैव कठिनान् शब्दान् सङ्गृह्य मनस्वि-मूर्धन्यः ।
तेषामपि सरलार्थं समलेखीदिति महान् हर्षः ॥११॥
सहजं संस्कृतवाचं पिपठिषन्ति ये विनैव काठिन्यम् ।
तेऽवश्यं काव्यमिदं हृदये कुर्वन्त्वलं लोकाः ॥१२॥
यात्राविलासमेतद् विलसति लोके समादृतं सर्वैः ।
तस्मात् संस्कृतशिक्षाभ्यासेऽपि द्राग् विचेतव्यम् ॥१३॥

—:*:—

## यात्राविलासस्य एकमध्ययनम्

डा० विष्णुशर्मा शास्त्री एम. ए. (संस्कृत, अंग्रेजी, दर्शन)
पी-एच. डी., डी. लिट्, दर्शनाचार्यः (लब्धसुवर्णपदकः)
भू. पू. निदेशकः, भारतशासनम्, नई दिल्ली

प्राचीने समये निखिलवाङ्मय-सर्वस्वभूतायाः संस्कृत-भारत्याः कियदभिरथमासीद्, अखिलस्य भूलोकस्य च सर्वाभ्यो

भाषाभ्योऽस्याः कीदृशं विपुलं वैभवमासीदिति नाधिकं वचः। परमद्य कीदृशी दुरवस्थाऽस्या वरीवर्त्तीत्यपि न तिरोहितं कस्यचित्। इदानीन्तु आङ्ग्लभाषापारीणा धीरधुरीणा जना जराजीर्णां जननीमिव गरीयसीं गिरमिमां नाभिनन्दन्ति, प्रत्युत निन्दन्ति समुपहसन्ति च। एवं विधेऽनतिकूले वातावरणे दूरमास्तां नवकाव्यनिर्माणं, प्राचीनैर्विरचितानि दुरवगाहश्लिष्टपदानि समासजटिलानि रम्याण्यपि विद्वद्धुरीणैकगम्यानि गद्यपद्यमधुराणि काव्यादीनीदानीन्तनैस्तु पल्लवग्राहिपाण्डित्यैः क्लिष्टानीति कृत्वा तान्यवलोकयितुमपि निरुत्सह्यते। अभ्यासशून्यत्वात् पठनपाठनपद्धतेर्दुरवस्थत्वाच्च साम्प्रतमाङ्ग्लमहाविद्यालयादिषु व्युत्पत्तिविरहिताः पाश्चात्त्यचाकचक्यमनुकुर्वाणो विद्यार्थिनोऽप्येषामध्ययनाद् दूरं धावन्ति। अतोऽस्यां स्थितौ नवकाव्यनिर्माणं तत्प्रकाशनञ्च सुतरां दुष्करमेव। तत्रापि गद्यकाव्यविरचनन्तु सर्वथैव परमसाहिक-विद्वज्जन-साध्यं कर्म। पद्ये त्वेकस्यापि शब्दस्य चमत्कारित्वे विस्फुरतीव सकलमपि पद्यं, परं गद्ये तु प्रत्येकशब्दस्यैव चेतोहारित्वं काव्यविच्छित्तेः प्रयोजकम्। अत एवालोचका गद्यं कवीनां निकषं निश्चिन्वन्ति।

किन्त्वयं कियान् सन्तोषस्य विषयो यत्सत्यप्येवंविधे व्यतिकरे निरवद्य-हृद्य-गद्य-लेखन-चातुरी-लब्धवर्णा गद्यसम्राजः कविशिरोमणयः म० म० श्री नवलकिशोरकाङ्कराः भूयोऽपि विश्वमान्याया अमरभाषायाः प्रसाराय प्रचाराय च गङ्गोत्तरीययात्रां व्याजीकृत्य यात्राविलासं नाम गद्यकाव्यं लोकेक्षण-लक्ष्यतामानेनीयिषत। इह लेखकमहोदयेन प्रासङ्गिकवर्णनेषु सन्दर्शितमात्मनः साहित्यागमावगाहनवैदुष्यम्। अनेकेषु स्थानेषु तु बाणसुबन्धुकविबन्धुवर्याणां सुप्रथितानां गद्यकाराणां प्रकृतिसौन्दर्य-

वर्णनं श्लेषोपमा-परिसंख्याद्यलङ्काराणां बाहुल्येन सह सहृदयानां मनो हरत्येव।

इयमनवद्यगद्यरचना वनितेव नवीनतानुरञ्जिता अद्भुत-काव्यशोभाविलसिता च विद्यते। सत्यपि समस्तपदानां बाहुल्ये कल्पनानां दुरूहता, भावानां दुर्बोधता, वर्णनानाञ्च कटुता न कुत्रापि प्राप्यते। प्राकृतिकं मानुषिकञ्चेत्युभयविधमपि वर्णनमत्र स्वाभाविकमेव दरीदृश्यते। स्त्रीणां सौन्दर्यवर्णनेऽपि लेखक-वर्योऽयं स्वानुभवनैपुण्यं निपुणं प्रादर्शयत्। गङ्गातटे स्त्रीणां चित्रमुपस्थापयन् लेखको लिखति ......श्रीमन्मनसिजवासभूमयो युवतयो यत्र स्नान्ति तत्रैव......नव्या नरा अपि मन्मथातपतप्ता इव चारुहासिनीनां नवयौवनोपवने विश्रान्तिसुखमनुबुभूषवः स्वैरं विचरन्ति। येषां कटाक्षवीक्षितैर्व्यथितहृदया काचन वृद्धा जलविहरणपरायणं वधूजनं कञ्चुलिकया स्तनयुगलं स्थगयितुं त्वरयति, अपरा कबरीभारमाकलयितुं कथयति,.........परा श्लथीभूतां काञ्चनकाञ्चीं रोद्धुं वावदीति,............कापि च ज्ञातरहस्या वयस्या स्नानोत्तीर्णां परिधृतपरिधानामपि वपुः-श्लिष्ट-जलक्लिन्न-चेलान्तर्दृश्यमान-सर्वावयवतया निर्वसना-मिवोपलक्ष्यमाणां........सस्मितमुपहसन्तीव किमपि सङ्केत्य सत्वरं कम्बलावरणं वरीतुं पिशुनयति,............पुनः काचन शिथिलीभूतां नीविं संयमयितुं च स्मारयति......(पृ० ३५)

कविशिरोमणिरयं प्रातः स्त्रीणां यमुनास्नानं रात्रिजाग-रणावसादसान्त्वनं यमुनायाश्च यामिनीपापप्रक्षालनं मनुते, स्नानोत्तरं च तासामधरस्पन्दने कामसहस्रनामोच्चारणमुत्प्रेक्षते (पृ० १४)। लेखकस्य दृष्टौ यमुनायां स्नानंविहारं कुर्वती तरुणी पृथुपयोधरयुगलेन हृदि निहितकुम्भा इव, नितम्बद्वयेन च अलाबुवाहिका इव तरन्ती प्रतीयते (पृ० १५)। पथि पथिक-

करस्पर्शमात्रेण युवतीनां सीत्कारकरणं तु कविः वशीकरण-मन्त्रोच्चारणमेवावगच्छति (पृ० २३)। दयितांसनिहितकोमल-करतला तन्वी रसिककवेर्दृष्टौ शाखिसमालिङ्गिता वल्लरीव आभाति (पृ० ३२)। एवंविधाः तरुणीवर्णनपराः अनेके प्रसङ्गाः विभिन्नाभिः कल्पनाभिः संभृताः हृदयं हरन्ति सहृदयानाम्। काव्येऽस्मिन् गद्यसम्राडयं लेखकः कुत्रचन वन्यवृक्षान् वातेरित-शाखाकरैः यात्रिबन्धूनाहूय तेभ्यः खगकुलरवमिषेण स्वागतं प्रयच्छतः इव, अपसृतपाण्डुपत्रैः आसनं समर्पयत इव च पश्यति, कुहचन सारिकाकल्पानां विहङ्गमाङ्गमानां मधुरां वाचं काम-शास्त्रकारिकामिव शृणोति, कुत्रचन सीत्कारं वितन्वतीम् अधरदलं व्रणयन्तीं रोमाञ्चसञ्चयमुदञ्चयन्तीं च पर्वतीयां वात्यां यौवनोन्मत्तसीमन्तिनीमिव अनुभवति (पृ० ८४)। एकत्र कविः श्वेतपुष्पकोरकं तरुणीमुखसाम्यं लब्धुं वृक्षशाखामवलम्ब्य अयाचितवृत्तिं च स्वीकृत्य कृच्छ्रं तपश्चरन्तं चन्द्रमसमेव निश्चिनुते ( पृ० ८५ )। गङ्गोत्तरीयस्थले तुषारपाते सञ्जाते तु लेखकदृष्टौ कैलासायितं सर्वशैलैः, पाण्डरपत्रायितं वृक्षदलैः, दधीयितं नदीकूलकर्दमैः, शंखायितं वन्यबिल्वैः, सुरपतिगजायित-ञ्च गण्डशैलखण्डैः, किमन्यत् गङ्गोत्तरीयस्थलाभोगेन सर्वेण रजतनगरायितमेव (पृ० ९०)। एकत्र सरस्तटोपकण्ठं कवि-शिरोमणेः दिव्यदृष्टौ प्रियङ्गुलता-किसलयानि युवतिरक्ताधर-सौकुमार्यात् पराजयं लब्ध्वा लज्जया सांप्रतं जलनिमग्नकाम-नया इव तत्र स्थितानि दृश्यन्ते स्म (पृ० १११)। परत्र लेखकः सायं पश्चिमपयोधौ सांशुकस्य सूर्यस्यावगाहनं सुरसारिति सलिलकेलिसंस्रस्त-स्तन-नितम्बवसनानां ललनानां दर्शनेन समुत्पन्नानि पापानि क्षालयितुमेव भवतीति स्वीकरोति (पृ० ११७)। कुत्रचिच्च कविः मरुभूमौ ग्रीष्मातप-लुप्त-जलान्

पल्वलवरान् विदीर्णकर्दमतया स्फुटितहृदयानिव विलोकयति (पृ० ११८)। एवमिह पदे पदे लेखकस्य श्रीकाङ्करमहोदयस्य लेखनकलावैदुषी हठात् पाठकानां हृदयानि आवर्जयति ।

काव्येऽस्मिन् लेखकेन दम्पत्योः गार्हस्थ्यजीवनस्यापि वास्तविकं चित्रणमक्रियत । यात्रामन्त्रणा, पत्नीपरामर्शः, स्वास्थ्यविकृतिः, पत्नीकृतः पदयात्रानुरोधः, पत्नीकृतं क्षमा-याचनं, पत्न्याः मूर्च्छा इत्यादयः प्रसङ्गाः दाम्पत्यस्नेहानुबन्धनं पुरः स्थापयन्तीव दृश्यन्ते । गर्त्तपतितायाः मरुत्तरशकटिकायाः वर्णनं पाठं पाठं को वा सहृदयः साश्रुनयनो न भवति ? भैरव-घाट्याः भैरवताञ्च विलोक्य कस्य रोमोद्गमो न जायते ? सर्वे एव प्रसङ्गाः प्रायोऽत्र सजीवाः स्वाभाविकाः सहजगम्याश्च सन्ति ।

कविवरः काङ्करोऽयं निपुणो वैयाकरणोऽपि प्रतीयते । प्राचीनानां कतिपयकवीनां गद्यपद्यरचना यथा च्युतसंस्कृतिदोष-दुष्टा अभिधीयन्ते, याः समाधातुं स्थितस्य चिन्तनमेव क्रियते आर्षप्रयोगं वा स्वीकृत्य सन्तोषमावहन्ति सन्तः, यथा च साम्प्रति-कानां शिक्षितानां लेखा अशुद्धिबहुला भवन्ति न तथात्र कश्चन प्रयोगः प्राप्यते । प्रत्युत व्याकरणस्य विशिष्टाः प्रयोगास्तत्र तत्र लेखकवर्येण प्रयुक्ता उपलभ्यन्ते । यङन्त-यङ्लुगन्त-सन्नन्तादि-प्रक्रिया-प्रयोगा अप्यत्र बहुशो लभ्यन्ते । विशिष्टास्तद्धितप्रत्यय-प्रयोगाः, भाववाच्यप्रयोगाः, कर्मप्रवचनीय-पूर्वपदसमासानामपि प्रयोगाः कवेरस्य व्याकरणप्रावीण्यं तत्प्रियताञ्च प्रकटयन्ति । सिद्धसाधोः प्रवचनञ्चास्य दार्शनिकगाम्भीर्यं द्योतयति ।

यद्यपि विशिष्टव्याकरणप्रयोगैः, बहुभिरप्रसिद्धशब्दैः, प्रलम्बसमासवाक्यैः, श्लेषाद्यलङ्कारयोजनैश्च काव्यमिदं साधा-रणमेधाजुषां कृते कठिनमिव प्रतीयते परं डा० नारायणशास्त्रि-

काङ्करलिखितया टिप्पण्या तु सर्वमिदं काठिन्यं दूरीभूतमेव। एतदतिरिक्तं बहुषु प्रसङ्गेषु मिथः वार्त्तालापसमुचितं सारल्यमपीह समधिकं वर्त्तते । यद्धि सुरसरस्वती-मन्दिरान्तःप्रविविक्षूणां त्वतीवोपकारकमिति नास्ति संशयलेशः। आङ्ग्लभाषासाहित्येन सह संस्कृतपाठकानां कृते तु महते लाभाय सम्पत्स्यते तदिदं काव्यम् । अत एव राजस्थानविश्वविद्यालयः एम. ए. परीक्षायां शास्त्रिपरीक्षायाञ्च काव्यमेतत् पाठ्यपुस्तकत्वेन स्वीकृत्य गद्यकाव्यस्यास्य लेखकस्य च गौरवमवीवृधदिति तस्य गुणग्राहिता कैरक्षरैरभिनन्दनीया ? अन्यैरपि विश्वविद्यालयैः सोऽयं मार्गोऽनुसरणीयः ।

—:*:—

## यात्राविलास - समालोचना

**विद्याभूषण पं० श्रीगणेशराम शर्मा, डूँगरपुरस्थः**
राजस्थान-साहित्य-संगम (एकादमी) संस्कृतपत्रिका-सम्पादकः

**जयन्तीमे बुधवराः काङ्कराः सत्कवीश्वराः ।**
**येषां सुललितं गद्यं बाणं संस्पर्धते किल ।।**

आदौ पुस्तकस्य बहिरङ्गावलोकनेनैव हृदयं मम हर्षातिशयमन्वभूद्, यतो यात्राविलासस्यास्य गद्यकाव्यस्य केचनांशाः पत्रिकायां कस्याञ्चिन्मे दृक्पथमवतीर्णा आसन् । तत्प्रौढिमाकलयतो मम मनसि तदानीमेव गद्यकाव्यमेतद् द्रष्टुमभिलाषोऽभूत् । तच्च काव्यं पुस्तकाकारं मनोहर-मुखपृष्ठावरणसहितं प्रकाशितं पुरतः साक्षाद्वर्त्तमानं विलोक्य मदान्तरिकः सत्यसङ्कल्पो भौतिक–सिद्धि–संसिद्ध इव व्यभाव्यत मया। तत्र च—

**प्रसाद-प्रासारा सरससुकुमाराऽतिमधुरा**
**सदर्थालङ्कारा सहज-रुचिराश्लेष-सुकरा ।**
**सदा भव्या नव्या ललितपदविन्यासचतुरा**
**कृतिः सेयं धन्यान् युवतिरिव लोकान् रमयतु ॥**

इति प्रशस्ति-परकां शिखरिणीं प्रपठ्य कमप्यनिर्वचनीय-मानन्दोल्लासमनुभूतवानहम् । कौऽसौ पद्यलेखकः सम्पादक-प्रवर इति जिज्ञासयाऽन्तरावरण-पृष्ठं मयाऽवालोकि यदा, तदाऽस्माकं गद्यकाव्य-लेखकस्यास्यैव ज्येष्ठतनयस्य श्रीयुत डा० नारायणशास्त्रि-काङ्करस्य वैयाकरणकेसरिणो विद्यावारिधे-र्विद्यालङ्कारस्य एम. ए. महाभागस्य शुभाभिधानं परिचीय तु वाङ्‌मनसयोरगोचरां महतीं मुदमवाप्नवम् ।

प्रास्ताविकं लेखमनुशीलयता मया दृष्टं यद् वर्त्तमान-काले सरल-सरस-ललितपद-गुम्फैर्लोकयोग्यस्य गद्यलेखनस्याव-श्यकता स्वयं पुस्तकप्रणेत्राप्यन्वभूयत । वर्त्तमान-जगतो जीवन-प्रवृत्तिचित्रणपरं सर्वविधैः साक्षरपाठकैरनायासं सुबोध्यं गद्य-साहित्यमद्यत्वे समपेक्ष्यते तत्त्वमेतदपि मे प्रत्यक्षमजायत । तद्-दृशाऽपि चासौ यात्राविलासाख्यः प्रबन्धोऽतीवोपयोगी, सर्व-साधारणानां संस्कृत-प्रणयिनां परिष्कृतमतीनां भारतीय-संस्कृति-सभ्यताभिमानिनां शिक्षाक्षेत्रे पत्रकारितायाञ्च संस्कृत-गिरां प्रचारं प्रसारं चेच्छतामुपयोगार्हं इत्यत्र नास्त्येव कोऽपि संशीतिलवलेशः ।

पुस्तकारम्भे प्रणीतानि दश पद्यानि ग्रन्थकारस्य श्री-काङ्करमहोदयस्य पद्य-गुम्फने पाटवं छन्दोऽभिज्ञत्वं,विनयातिशयं, कुलीनतां, निरभिमानित्वं विद्वज्जनान् गुरुजनान् प्रति श्रद्धा-भणिति-प्रगल्भत्वं च प्रत्याययन्ति । गद्यप्रबन्धलेखनार्थं पुर-

स्कृतोऽप्ययं लेखक-परिवृढः पद्य-गुम्फेऽपि ह्यनन्यसाधारणीं वैदग्धीं धत्त इति पद्य-पाठकालेऽनुभूति-प्रवणोऽभूवम् ।

साहित्यिकगद्यकाव्यस्यैतस्य मुख्यविषयस्तूत्तरापथ-तीर्थ-भूमिकानां प्राकृतिकानां रमणीयस्थलानां वर्णनमेवास्ति तथापि तत्र तत्र सहृदयेनानेन श्रीकाङ्करमहाभागेन प्रसङ्गोपात्तानि तानि तानि मनोहराणि तत्त्वानि संवेदनशीलतया वर्णितानि, यैर्भावानुभूति-प्रवणानां सहृदयधुरीणानां सचेतसां संस्कारवतां कोमलकान्तहृदयानां पाठकानां हृदा प्रकृतिपर्यवेक्षण-सुखमपि लभ्यते नाम नूनम् । शतप्रायेषु गद्यानुच्छेदेषु वर्णिताः सर्वेऽपि च ते त एते विषया हृदयस्पृशो मार्मिकत्वेन मुक्तभावेनोपस्थापिता वर्ण्यं विषयं चित्रमयं विदधानाः किमपि लोकातिशायि सुख-मुद्भावयन्ति वाचकानां मनःसु । अवश्यमेवायं यात्राविलासाख्यो गद्यप्रबन्धोऽभिनवगद्यविधायां श्रेष्ठतयाऽस्तीति मम हार्दिको-ऽस्त्यभिप्रायः । यतोऽत्र कवेः काङ्करस्य काव्यकौशलं विचित्रं मोदं वितरति । विशिष्टकाव्यशैल्या काव्यमिदं साम्प्रतिकानि गद्यकाव्यानि सर्वाण्यतिशेते । यादृशी साहित्यिकवर्णनासम्पदत्र लभ्यते न तादृशी कस्यचन अन्यस्य लेखकस्य गद्यकाव्ये । अत्र काव्यसौन्दर्यं माधुर्यं वैयञ्जनिकत्वमित्यादिकं किमप्यलौकिक-मानन्दं वितनुते । निश्चयेनात्र भाषासौष्ठवं, वर्णनानैपुण्यं, कल्पनावैचित्र्यं, पदलालित्यं, श्लेषोपमारूपकाद्यलङ्काराणां स्थानानुकूलमुपस्थापनं, भावप्रदर्शन-नैपुण्यञ्चेमानि सर्वाणि हठात् पाठकानां मनो हरन्त्येव । स्थाने स्थाने पेशलः प्रसादगुणः, ऊर्जस्वलः शब्दविन्यासः, निरवद्यगद्यलेखनप्रकारश्चाप्यत्र विशेषं सौष्ठवमातन्वते इमे सर्वे ।

गद्यकाव्येऽत्र बहुषु स्थलेषु तादृशा वाक्यविन्यासाः प्रकामं विलसन्ति यैः सहजमेव संस्कृतभाषण-वार्त्तालापादिषु

प्राविण्यं प्राप्नोति जिज्ञासुः। यथा यात्रामन्त्रणायां "……हन्त दारुणोऽयं शमन इव प्रसादप्रशमनो निदाघसमयः। इह तु संप्रति अरणं मरणम्, अदहनं देहज्वलनम्……अतः दिवसेषु एषु कुत्र मनो विनोदनीयम् ? कः समाश्रयणीयः ? का वा तीर्थ-स्थली गमनीया ? कोऽस्ति उपायः ? कः खलु सहायः ? को विधिः, का युक्तिः, केन कौशलेन, कतमेन विधानेन, कतरेण प्रकारेण, कतमेन कथालापेन, केन वा भैषज्येन नैदाघोऽयं व्याधिः प्रशमेत् क्लान्तः श्रान्तश्चात्मा प्रसीदेदिति। श्रुत्वैवं… …मदीया दयिता सुधामुचं वाचमुच्चारयन्ती समवादीत्— आर्यपुत्र ! किमप्यहं पिपृच्छिषामि, कमप्युपायञ्च दिदिशामि। मयोक्तं भद्रे! सर्वत्र दयिताधीनं सुव्यक्तं चित्तरञ्जनम्…अतो नहि सङ्कोचः समञ्चनीयः, कथ्यतां यत्कथनीयम्…काऽत्र विचारणा" (पृ. ६) '…श्रीमन्तः ! भवन्तः एव भणन्तु, कन्योत्पत्तौ वराक्याः जन्मग्रहीत्र्याः कन्यायाः को दोषः ? अत्र तु पितरावेव प्रमाणम्। …किं कदापि कथयति वराकी भारतीया तनया यन्ममोद्वाहे इयद्धनं व्ययीकरणीयं ? मह्यं वा इयद् देयम्…(पृ. ४२)। "अतो यदि मदीयं निवेदनमनुरोरुध्यन्ते भवन्तः, सम्भावनीयां वा मम्म-न्यन्ते दयितां…तर्हि नोपेक्षणीया ममेयमभ्यर्थना, न तोदनीया मदीया मनःस्थली……। सौम्येन मनसा निवेदयामि, प्रणतेन शिरसा प्रसादयामि, पौनःपुन्येन पादौ संवाहयामि…" (पृ.५६) इत्याद्या अनेके प्रसङ्गा अत्र सन्ति। यैः प्रसादगुणो वर्षन्निवा-भाति।

वस्तुतो यात्राविलासगद्यकाव्यस्यास्य लेखनशैली धारा-प्रवाहा पुण्या भागीरथीव पुनाति परिष्कृतरुचीन् पाठकान्। भाषा चास्य प्रबन्धस्य प्राञ्जला ललितपदविन्यासा सालङ्कारा प्रसादमाधुर्यार्थ-गम्भीरा सरला सरसा च विभाति। क्वचित्

क्वचिदप्रसिद्ध-शब्दानां यङ्लुगादिप्रक्रियापदानां प्रयोगैरनवगाढ–व्याकरण–तत्त्वसिन्धूनां सामान्य–पाठकानां तदर्थावगमे किमपि काठिन्यं जायते परन्तु पादटिप्पणीभिर्यत्र तत्र प्रयुक्त-पदविशेषाणां सङ्केतैस्तदपि चापाकृतमिति तत्क्रान्तदर्शित्वमेव तनुते । पुस्तकान्ते कठिनशब्दानामर्थपरिशिष्टेनार्थावबोधे पाठकानां सुविधा सविशेषमापाद्यतेत्यपि श्लाघ्यमेव ।

वस्तुतोऽभिनन्दनार्हमेतद् यात्राविलासाख्यं गद्यकाव्यम् । वयमेतस्याधिकाधिक प्रचारं प्रसारं च कामयामहे । वयमत्र गौरवमनुभवामो यदद्यापि भारते सुरभारती–सेवाव्रतपरायणा विद्वांसः म. म. श्रीनवलकिशोरकाङ्कर-महाभागसदृशा विद्यमानाः सन्ति । ये कठिनेऽप्यस्मिन् कलिकाले, दुर्लभेष्वपि संरक्षकेषु, विरलविरलेष्वपि मुद्रणालयाक्षर-संयोजकेषु निसर्ग-कवि-प्रतिभा-प्रेरिता निष्काममेवंविधाः कृतीर्ग्रन्थन्तो वैभवं सुरभारत्याः, प्रसादं संस्कृतवाङ्मयस्य ज्ञान-विज्ञानसुस्फीतां तामिमां वाणीं सेवमानास्तपस्विनो मोदन्तेऽन्यांश्च मोदयन्तीति ।

## एक समीक्षा

डा० ईश्वरप्रसाद चतुर्वेदी एम०ए०, पी-एच०डी०

प्रोफेसर गवर्न० सं० कालेज, जोधपुर

लेखक के लिए आवश्यक है कि वह अपने लिपिबद्ध भावों को पाठक वर्ग के ज्ञान-तन्तुओं में सहज ही प्रवाहित करने की क्षमता रखता हो । परन्तु इन सक्षम लेखकों में भी उत्कृष्ट काव्य साहित्य की रचना केवल सहृदय व्यक्ति ही कर सकता है और यह रचना भावुकता और विद्वत्ता दोनों के सामंजस्य की देन है । जिनमें प्रथम प्रकृतिदत्त और द्वितीय

ज्ञानोपार्जित होती है। इसीलिए कविकर्म कठिन माना गया है। हमारे आलोच्य काव्य के लेखक इन्हीं सफल कवियों में से हैं।

सांप्रतिक साहित्य क्षेत्र में इन म० म० कविशिरोमणि श्रीनवलकिशोर जी काङ्कर के नाम से कौन परिचित नहीं? आज हिन्दी और संस्कृत साहित्य संसार का निवासी प्रत्येक विद्वान् आपकी लेखनी से परिचित है। स्व० म० म० विद्या-वाचस्पति श्रीमधुसूदनओझाजी से वेद-वेदाङ्ग शास्त्रों का अध्ययन करते समय ही आपने साहित्य क्षेत्र में प्रवेश करके वीणापाणी शारदा के शृङ्गार में कवियों को सहयोग देना प्रारम्भ कर दिया था जो अब तक भी यथावत् चल रहा है। हाल ही में महामना मालवीयजी द्वारा संस्थापित-भारती-परिषद् प्रयाग (अ० भा० सांस्कृतिक संस्थान) द्वारा इलाहबाद में आपको प्रदान की हुई **"महामहिमोपाध्याय"** की संमानोपाधि आपके विशिष्ट वैदुष्य की अनुपम उपलब्धि है।

आपने मानव के सर्वतोमुखी जीवन-विकास के लिए साहित्य-साधना को सफल साधन समझकर अपनी सारी प्रतिभा इसी में अर्पण कर दी जो कि विभिन्न साहित्यधारा के रूप में विश्व के समक्ष बह निकली और जिसके निरर्गल रस-निष्यन्द में सभी आनन्द लेने लगे हैं। आपका यह प्रस्तुत 'यात्रा विलास' गद्य काव्य इसी प्रकार का सुधा-सरोवर है। जिसके पद-पद पर सुन्दर कल्पना का और वर्णनशक्ति का अपूर्व आनन्द-प्रवाह लहरें लेता है। इसमें गङ्गोत्तरी यात्रा का साहित्यिक वर्णन है जो संस्कृत साहित्य में संभवतः प्रथम ही अवतरण है। यद्यपि इसमें किसी यात्री का नामोल्लेख नहीं हुआ है और न यह व्यक्त किया गया है कि यह यात्री अमुक नगर का निवासी है



किन्तु जान पड़ता है कि यह लेखक के स्वयं के यात्रानुभवों का

ही मूर्त्तरूप है जो भाषा भाव वर्णन शैली आदि की दृष्टि से एक अत्यन्त उदात्त स्वरूप है।

इस गद्य पुस्तक का कथानक तो इतना ही है कि ग्रीष्म की ऊष्मा से संतप्त कोई व्यक्ति पत्नी से परामर्श करके उसके साथ ट्रेन द्वारा गङ्गोत्तरी के लिए रवाना हो जाता है। मार्ग में दिल्ली में रुकता है और वहाँ घूमघाम करके पुनः ट्रेन से हरिद्वार पहुँचता है। गङ्गा में स्नान करके हृषीकेश जाता है और अस्वस्थ हो जाने से कुछ दिन वहाँ रुकता भी है। इसके पश्चात् कतिपय दिन तक गीताभवन का आनन्द लेता है और वहाँ के आस-पास के दर्शनीय स्थानों का भ्रमण करके एक दिन प्रातः मोटर में बैठकर उत्तरकाशी चला जाता है। वहाँ एक दो दिन रुक कर मोटर से लंकास्थली जाता है। मोटर का मार्ग यहाँ तक ही है, आगे पैदल चलना पड़ता है। पहाड़ी मार्ग से थक कर पत्नी मूर्च्छित हो जाती है जो बड़े उपचार करने पर चेतना प्राप्त करती है। विवशतावश रात्रि में वहां ही मार्ग में रुकना आवश्यक हो जाता है और दूसरे दिन पुनः पैदल चलते हुए दोनों स्त्री पुरुष गङ्गोत्तरी पहुँच जाते हैं। यहां कुछ दिन रहकर अन्य यात्रियों के साथ गोमुख की ओर रवाना होते हैं और मार्ग में तूफान आ जाने से एक सिद्ध साधु के आश्रम में पहुँचकर रात बिताते हैं। साधु के मना कर देने पर आगे नहीं जाते हैं किन्तु साधु रात में वहाँ से अन्तर्धान हो जाता है और ये लोग वापस गङ्गोत्तरी आकर उसी मार्ग से वापस हृषीकेश आ जाते हैं तथा वहाँ से हरिद्वार एवं दिल्ली होते हुए अपने नगर को लौट आते हैं।

यह कथानक छोटा सा है, कोई नवीनता नहीं किन्तु विशेषता यह है कि लेखक की सरल रचनायें अलंकारिक

भाषा में गुम्फित इसी संक्षिप्त कथानक के प्राकृतिक दृश्यों एवं मानव सौन्दर्यों के काव्यात्मक वर्णन के रस-प्रवाह में तन्मय होकर आनन्द लेता हुआ सहृदय जन उससे वाहिर होना ही नहीं चाहता।

प्रकृति और मानव का अविच्छिन्न सम्वन्ध है। यद्यपि आधुनिक मानव नगर-निवासी बनकर प्रकृति से अधिकाधिक दूर होता जा रहा है; किन्तु जब कभी वह उसके समीप पहुँचता है तो भाव-विभोर हो उठता है। वर्ड्सवर्थ-रूसो प्रभृति पाश्चात्त्य दार्शनिकों ने तो प्रकृति और मानव में अन्तर ही नहीं माना है। इस तादात्म्य से ही शहरी चाकचक्य और अतुल कोलाहल से श्रान्त होकर आज मानव प्रकृति के विशद अंक में विश्राम पाने के लिए दौड़ पड़ता है। अतः हम मानवजीवन को प्रकृति से अलग नहीं कर सकते और यही कारण है कि मानव-साहित्य में प्रकृतिवर्णन ने उच्च स्थान प्राप्त कर रखा है। संस्कृत, हिन्दी या अंग्रेजी किसी भी भाषा का ऐसा कोई कवि नहीं है जिसने प्रकृति का सुन्दर शृङ्गार न किया हो।

इस 'यात्रा विलास' में भी प्रकृति वर्णन के अनेक प्रसंग आये हैं। जिनमें लेखक की पैनी दृष्टि ने प्रकृति के सूक्ष्म अंगों तक का अवलोकन किया है। इस काव्य के प्राकृतिक वर्णन इतने सशक्त हैं कि वे दृश्य हमारे सामने मूर्त्तरूप लेकर उपस्थित हो जाते हैं। रेल में बैठकर जाते हुए मार्ग का दृश्य, हरिद्वार की गङ्गा का तट, उत्तरकाशी के मार्ग में मोटर, पर्वतीय मार्ग दृश्य, लङ्कास्थली, सरोवर, वर्षा-वर्णन, सायंकालिक दृश्य—इत्यादि साहित्यिक वर्णनों में लेखक की कल्पना के उड़ान के साथ उसकी निरीक्षण शक्ति का भी मंजुल सामञ्जस्य प्राप्त होता है जो केवल अनुभवगम्य है। लेखक मृग के शृंग

के समान भंगुर तरु–टहनियों पर स्थित सारिका जैसी विहग-वधुओं की मधुर वाणी में कामशास्त्र की कारिकाओं का अनुभव करता है तो वह कहीं हिमालय के गहन वनों की मन्द-मन्द मकरन्द बिखराती हुई, रोमाञ्चित करती हुई, सीत्कार सिखाती हुई और अधरों को व्रणित करती हुई बर्फीली हवा में यौवनोन्मत्त सीमन्तिनी के दर्शन करता है। इसी प्रकार कहीं आम के वृक्ष के नीचे पके हुए धान की क्यारियों में सींग की नोंक से हरिणी को खुजलाता हुआ हरिण कवि की दृष्टि में उसे परिरंभण के लिए अनुकूल कर रहा है तो कहीं पर कपोत-पोत कबूतरी को कमल कोमल कवलोपायन देता हुआ उसकी चाटुकारिता कर रहा है। कवि की कल्पना में ऊँचे वृक्षों पर नीचे की ओर झूमती हुई लताएं वन-किन्नरियों के झूले प्रतीत हो रहे हैं। प्रकृति के साथ मानवीयकरण करता हुआ लेखक लिखता है कि यहाँ सचेतन प्राणियों की भाँति निश्चेतन वन्य वृक्ष भी हवा से हिलती हुई शाखारूपी बाहुलताओं से यात्रिबन्धुओं को सानुरोध बुला बुलाकर झड़ते हुए पत्तों का आसन देते हुए और पक्षियों के कलकल से उनका स्वागत करते हुए से जान पड़ते हैं।

लेखक ने प्रकृति के कोमल अवयव का जितना निरीक्षण किया है उतना उसके उग्ररूप को भी देखा है। "भैरवघाटीभयङ्करता, मार्गे झंझोत्पाताः, उत्तरकाशीमार्गे वर्षोत्पाताः" इत्यादि प्रसङ्ग इसके लिए देखे जा सकते हैं।

प्रकृति की भाँति मानवस्वभावके चित्रण करने में भी कवि की तूलिका बड़ी सफल सिद्ध हुई है। आधुनिक नगरवासी स्त्री-पुरुषों का वर्णन बड़ा ही वास्तविक हुआ है, जिसमें साहित्यिक छटा ने और भी चार चाँद लगा दिये हैं। 'देहल्यां स्त्रीजनः

देहल्यां पुरुषा:, हरिद्वारे गङ्गातटम्, गङ्गातटे स्त्रीणां स्नानम्, पर्वतीया: स्त्रिय:" इत्यादि प्रसंगों में इनका बड़ा ही स्वाभाविक वर्णन हुआ है। इनके पढ़ने से ज्ञात होता है कि लेखक सब प्रकार के स्त्री-पुरुषों के रहन सहन, वेशभूषा, और चाल ढाल आदि से कितना परिचित है। इनकी पैनी दृष्टि गङ्गा में स्नान करती हुई स्त्रियों की ओर जाने से भी नहीं चूकी।

समय गतिशील है और वह सबको पीछे छोड़ता चलता है। सृजन-प्रतिभा जब प्रस्फुटित होती है तब वह कुछ विशिष्ट संस्कारों को भी साथ लाती है। किन्तु समय के साथ संघर्ष करते हुए तो कुछ ही महारथी चल पाते हैं क्योंकि समय के साथ सामञ्जस्य बनाये रखना कम परिश्रमसाध्य नहीं। यात्रा-विलास के अध्ययन से ऐसा लगता है कि इसके स्रष्टा की दृष्टि अपने समय को देखने, समझने और सोचने में भी लगी है तथा उनकी लेखनी साहित्यिक छठा के साथ निर्भीकतापूर्वक उसको व्यक्त करने में भी नहीं हिचकिचाती। आगे लिखी पंक्तियाँ वर्तमान स्थिति पर कितना मार्मिक व्यंग कस रही हैं—'एवं हि तत्र...... पुरलोकान् लोकं लोकं मनस्तोदेन चर्व्यमाण इव, मार्यमाण इव..................चाचिन्तयम्—हन्त यत्र पूर्वं..................भगवन्नामनादै: पूर्यते स्म गगनतलम्,......तत्रैवाद्य स्फोटयन्ति चीत्कारमया बलात्कारमया हिंसनमया आरावा: कर्णौ, अपह्रियन्तेऽद्य स्त्रिय: ...... अवहेल्यन्ते सदाचारिण:..........। किमन्यत् प्रतिपुरुषं तन्मुखविवरविनि:सृतश्च बीड़ी-सिगरेटे-त्यादिनामंजुषां शलाकाखण्डानां धूमो देहं वायुपरिसरञ्च दूषयतितराम्..................इत्याद्यरुन्तुदं विचारं शोचं शोचं कामुकजनानुबध्यमान-कुलतरुणीजनविविधापशब्द-क्षुब्धहृदयोऽहं ......। (पृ० २७)

एक श्रेष्ठ साहित्यकार अपने युग का प्रतिनिधि भी होता है और साहित्य अपने समाज का दर्पण माना जाता है। अतः लेखक चाहे, कवि उपन्यासकार या नाटककार हो उसकी रचना पर प्रचलित विचारधाराओं तथा सामयिक समस्याओं का किसी न किसी रूप में समावेश अवश्य हो ही जाता है। युग उसकी कृतियों से झांकता है और संकेत करता है। वर्तमान कालीन भारत में पहले की अपेक्षा बहुत परिवर्त्तन आ गया है। यहाँ अंग्रेजों के दीर्घकालीन शासन के कारण जिस पाश्चात्य नयी सभ्यता ने जन्म लिया था वह अब देश के स्वतन्त्र होने पर भी मिटाये नहीं मिट रही प्रत्युत प्रतिदिन अधिकाधिक पनपती जा रही है। इसकी झलक हमें इस गद्य काव्य के सिद्ध-साधु के वर्णन के प्रसंग में प्राप्त होती है। गङ्गोत्तरी से गोमुख को जाते समय मार्ग में मिला हुआ सिद्ध महात्मा कहता है—"साम्प्रतिके समये तु……महाकाल इव विश्वविलयनैककुतूहली करालः कलिकाल आवृतवृतीरिव श्रुतिमात्रावशेषाश्चिकीर्षति श्रुतीः, स्मृतितः प्रच्यावयितुमभिलषति स्मृतीः। दर्शनमात्रैक-फलानि विधित्सति दर्शनानि। दग्धांगानीव समुपजिहसिषति वेदांगशास्त्राणि। पुराणभवनानीव सिसाधयिषति तृणत्याज्यानि पुराणानि। सरसमिति पचेलिमं फलमिव जिघत्सति भक्ति-माधुर्यम्। रसायनमिति कवलीकर्त्तुन्त्वरयति योगभावनो-द्रेकम् ……।" हन्त सम्प्रति तु नव्य–संस्कृति–संस्कृताः पण्डित-म्मन्या अधन्याः शास्त्राण्येतान्यवैज्ञानिकानीति प्रत्याख्याय तानि दूरतस्त्यजन्ति…… दृढमुपहसन्ति च" (पृ. १०५) इत्यादि।

इसी प्रकार साहित्यकार अपने समय की धार्मिक, सामाजिक, आर्थिक एवं हार्दिक समस्याओं से भी मुक्त नहीं होता है और वह यथाशक्ति अपने साहित्य के माध्यम से इन

समस्याओं के समाधान का भी यत्न करता है। श्रीकाङ्करजी ने प्रत्यक्ष या अप्रत्यक्ष रूप से इस सम्बन्ध में भी अपनी दृष्टि से संकेत किया है। यहाँ भारतवर्ष में ईश्वरोपासना सम्बन्धी मतमतान्तरों को लेकर बहुवाद फैला हुआ है, जिसने विभिन्न सम्प्रदायों को जन्म देकर साम्प्रदायिकता की एक जटिल समस्या खड़ी कर रखी है और जो हमारी राष्ट्र की एकता के लिए भी सबसे बड़ी घातक बनी हुई है। प्रस्तुत पुस्तक में इस सम्प्रदायवाद के मूल में स्थित अनेकेश्वरवाद की समस्या का उसी महात्मा के प्रवचन के माध्यम से इस प्रकार समाधान किया गया है जो श्री काङ्करजी के दार्शनिक ग्रन्थों के गहन अध्ययन का भी सूचक है—"सोऽयमेव त्रिपुरुषस्वरूपः पुरुषः शास्त्रेषु षोडशकलनाम्ना निर्दिष्टः। स एव ब्रह्मा, स एव विष्णुः, स एव शिवश्चेति त्रयाणामेषामेकस्यैवेश्वरस्य स्वरूपत्वेन हृदये चाविनाभावतयाऽन्तर्यामिरूपेण नित्यं सहावस्थानादेकस्योपासनया अपरः समुपासितो भवति। अत्र भेदबुद्धिर्न लोकानां श्रेयसे भूयसे" (पृ. १०७) इत्यादि।

'यात्रा विलास' की भाषा अधिकतर समासबहुला गौडी शैली की होने के कारण यत्र तत्र कुछ दुरूहता लिए हुए अवश्य है किन्तु सरलातिसरल व्यावहारिक वाक्यों की भी कमी नहीं है। स्टेशन पर रेलगाड़ी में चढ़ने उतरने वालों के वर्णन में कवि लिखता है—"त्वरितगमन! पश्य पश्य कथं विस्मरसि पेटिकां बहिरेव, गमनोन्मत्त! कथं पुरः प्रयासि महिलामपि न पश्यसि? यौवनान्ध! मां पादेन किं प्रहरसि? रे नेत्रहीन! कुतः समागच्छसि शिरस्येव? त्यक्तधैर्य! क्षणं तिष्ठ। भद्रमानुष! अन्यत्र स्थानं मार्गय······रे स्थविरे! किञ्चेलाञ्चलं पातयसि मे स्तनन्धये?" (पृ. १०)

इसी प्रकार 'केयमिति कथमिति कुत इति, किमिति, किमजनि किमजनीति क्रियासमभिहारेण जिज्ञासया वत्तुंलीभूय सर्वथाऽसह्यः खल्वस्याः सन्तापः परीक्षणीयोऽस्या हृदयोत्कम्पः ......सञ्चारयतु२ सद्यःसमानीतेन अनेन कदलीदलेनार्द्रवाताम् शिथिलयतु२ धम्मिल्लम्, अपनयतु२ परमं पिनद्धं पयोधरावरणम्, कलयतु२ करस्खलितं काञ्चनवलयम्'—(पृ० ८२) इत्यादि स्थलों पर प्रसाद गुण की महिमा अपूर्व दृष्टिगत होती है।

शब्दराशि पर भी लेखक का पूर्ण अधिकार है। वह वर्णन के अनुकूल ही शब्दगुम्फन करता है। कहीं झंझोत्पात या वर्षोत्पात आदि का वर्णन करना होता है तो तदनुकूल ओजोगुण-विशिष्ट शब्दों का आश्रय लेता है और यदि कहीं पर सुन्दर प्रकृति के कोमलांग का निरीक्षण करता है तो वहाँ कोमल कान्त पदावली वाले वाक्यविन्यास प्रस्तुत करता है। वस्तुतः सिद्धहस्त लेखक किसी निश्चित शैली के ही क्रीतदास नहीं हुआ करते हैं। वे तो विषयानुसार अपनी शैली बदलते रहते हैं।

प्रस्तुत पुस्तक में आधुनिक नए शब्दों का, मुहावरों का और व्यावहारिक वाक्यों का भी खूब प्रयोग हुआ है जिससे संस्कृत बोलने में बड़ी सहायता मिलती है। लेखक के द्वारा इसमें व्याकरण के विशिष्ट प्रयोग भी जगह जगह जानबूझ कर किये प्रतीत होते हैं। जैसे—जिगरिषुः, चिकरिषुः, प्रावयन्ती, सेस्त्रीयमाणाः, अन्तर्वणभुवि, औंपर्कणिकलोचनाः, वनान्तप्रेङ्खणम्, शौवस्तिकत्वम्—इत्यादि। संभवतः ये प्रयोग वैयाकरणों को प्रसन्न करने के लिए किये हैं।

इसमें अलंकारों का भी बहुतायत से प्रयोग हुआ है। उपमा, श्लेष, विरोधाभास, परिसंख्या, उत्प्रेक्षा, रूपक और

अनुप्रास अधिक प्रयुक्त हुए हैं । जिनसे सहसा
स्मरण हो आता हैं ।

इसके विषय में संक्षेप में यही कहा ज
गद्य काव्य एक प्रकार का विभिन्न चित्रों का
एक से एक नये चित्र एकत्र किये गये हैं
और लच्छेदार भाषा का चोखट जड़ा हुआ है
दर्शक को आकृष्ट किये बिना नहीं रहता ।

—: ※ :—

## यात्राविलास-वैशिष्ट्य

**श्रीदीनानाथशास्त्री सारस्वतः,**

सर्वत्रातनुसंमानोपचिता गद्य-पद्यलेख
जयपुराभिजनाः कविशिरोमणि-म० म० श्रीन
निश्चप्रचं साम्प्रतिकानां गद्यकाराणां सम्राज
वचः । अमीषां कादम्बरीगद्यदेशीया यात्रावि
कृतिर्मयावलोकिता । परममपेप्रीयिष्टैषा
वृत्तिम् । नेदृशोऽद्यावधिर्यात्रोदन्तः साहित्यिक
मे दृशमपरीस्पृशिष्ट संस्कृतवाङ्मये । प्रथम
पठने क्षणं क्षणं मनसोऽभिलाषो वरीवृध्यते,
नुभूतिर्नरीनृत्यते, प्रकृतिसुन्दरी च
दरीदृश्यते ।

एतदध्ययनेन न केवलं मनोविनोद ए
व्यावहारिकशब्दानां परिचयः, अभिनव-क
प्राचीनधर्म-संस्कृतिरक्षणञ्च बोभूयते ।

## विद्या-वैभव-भवन, जयपुर से प्रकाशित
## सम्प्रति उपलभ्यमान पुस्तकें–
### ( म० म० श्रीनवलकिशोर काङ्कर विरचित )

१. **राष्ट्रवेदः**—वैदिक भाषा और वैदिक छन्दों में राष्ट्रीय सद्भावनाओं से ओतप्रोत और देशी विदेशी विद्वानों से प्रशंसित विश्व का सर्वप्रथम पाँचवाँ वेद, संस्कृत-भाष्य और हिन्दी-अंग्रेजी-अनुवादसहित ।

२. **शास्त्रसर्वस्वम्**—वेद, दर्शन और साहित्य के आचार्य एवम् एम. ए. परीक्षार्थियों के लिये स्वीकृत सर्वोत्तम पाठ्यपुस्तक ।

३. **यात्रा-विलासम्**—प्रिय पाठकों के हाथ में प्रस्तुत है ही ।

४. **प्रबन्ध-मकरन्दः**—शास्त्री, आचार्य, बी. ए., एम. ए. आदि परीक्षार्थियों के लिये संस्कृत में सर्वोत्कृष्ट निबन्धों की स्वीकृत पुस्तक ।

५. **प्रबन्धामृतम्**— ,, ,, ,, ,, ,,

६. **नवल-सतसई**—बिहारी सतसई की भाँति ब्रजभाषा में लिखित हिन्दी-टीकासहित सचित्र अत्याकर्षक पुस्तक ।

७. **यात्रा के सुखद क्षण**—साहित्यिक मनोरम गद्यकाव्य ।

८. **लाखीणा बोल**—राजस्थानी ढूँढाड़ी भाषा में लिखित अनुपम मुक्तक काव्य हिन्दी-टीका सहित ।

९. **सैल-सपाटा**—ढूँढाड़ी भाषा में सर्वप्रथम लिखित सुन्दरतम साहित्यिक गद्यकाव्य ।

### (डॉ० नारायणशास्त्री काङ्कर द्वारा व्याख्यात एवं सम्पादित )

१०. **संक्षिप्त लघुकौमुदी**—सटीक सम्पूर्ण ।

११. **सरल-शिवराज-विजयः**—विशद शब्द

१२. **संज्ञा-प्रकरणम्**—विस्तृत हिन्दी व्याख्य

१३. **सन्धिप्रकरणम्**—विस्तृत हिन्दी व्याख्य

